# सूचीपत्रम्।





श्रीमद्भगवद्गीतासूचीपत्रसमाप्तिरेषा।

# उपक्रमणिका।



शेषाशेषमुखव्याख्याचातुर्य्यं त्वेकवक्त्रतः ।
दधानमद्भुतं वन्दे परमानन्दमाधवम् ॥ १ ॥
श्रीमाधवं प्रणम्योमाधवं विश्वेशमादरात् ।
तद्भक्तियन्त्रितः कुर्व्वे गीताव्याख्यां सुबोधिनीम् ॥ २ ॥
भाष्यकारमतं सम्यक् तद्व्याख्यातुर्गिरस्तथा ।
यथामति समालोक्य गीताव्याख्यां समारभे ॥ ३ ॥
गीता व्याख्यायते यस्याः पाठमात्रादयत्नतः ।
सेयं सुबोधिनी टीका सदा ध्येया मनीषिभिः ॥ ४ ॥

इह खलु सकललोकहितावतारः परमकारुणिको भगवान् देवकीनन्दनस्तत्त्वाज्ञानविजृम्भितशोकमोहभ्रंशितविवेकतया निजधर्म्मपरित्यागपूर्व्वकपरधर्म्माभिसन्धिनमर्ज्जुनं धर्म्मज्ञानरहस्योपदेशप्लवेन तस्माच्छोकमोहसागरादुद्दधार। तमेव भगवदुपदिष्टमर्थं कृष्णद्वैपायनः सप्तभिः श्लोकशतैरुपनिबबन्ध। तत्र च प्रायशः श्रीकृष्णमुखादिनिःसृतानेव श्लोकानलिखत् कांश्चित् तत्सङ्गतये स्वयञ्च व्यरचयत्, यथोक्तं गीतामाहात्म्ये—"गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः। या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता" इत्यादि।

# श्रीमद्भगवद्गीता।

## प्रथमोऽध्यायः।

धृतराष्ट्र उवाच।

धर्म्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।
मामकाः पाण्डवाश्चैव किमकुर्व्वत सञ्जय ॥ १

सञ्जय उवाच।

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्य्योधनस्तदा।
आचार्य्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २

---

अत्र तावद्धर्म्मक्षेत्रे इत्यादिना विषीदन्निदमब्रवीदित्यन्तेन ग्रन्थेन श्रीकृष्णार्ज्जुनसंवादप्रस्तावाय कथा निरूप्यते,—धृतराष्ट्र उवाचेति। धर्म्मक्षेत्र इति। भोः सञ्जय! धर्म्मभूमौ कुरुक्षेत्रे। धर्म्मक्षेत्र इति कुरुक्षेत्रविशेषणम्, एषामादिपुरुषः कश्चित् कुरुनामा बभूव, तस्य कुरोर्धर्म्मस्थाने मामकाः मत्पुत्राः पाण्डुपुत्राश्च युयुत्सवो योद्धुमिच्छन्तः समवेता मिलिताः सन्तः किमकुर्व्वत किं कृतवन्तः ॥ १ ॥

सञ्जय उवाच। दृष्ट्वेत्यादि। पाण्डवानामनीकं सैन्यं व्यूढं व्यूहरचनया अधिष्ठितं दृष्ट्वा द्रोणाचार्य्यसमीपं गत्वा राजा दुर्य्योधनो वक्ष्यमाणं वचनमुवाच ॥ २ ॥

पश्यैतां पाण्डुपुत्राणामाचार्य्य महतीं चमूम्।
व्यूढ़ां द्रुपदपुत्त्रेण तव शिष्येण धीमता ॥ ३
अत्र शूरा महेष्वासा भीमार्ज्जुनसमा युधि।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्य्यवान्।
पुरुजित् कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः ॥ ५
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्य्यवान्।
सौभद्रो द्रौपदेयाश्च सर्व्व एव महारथाः ॥ ६
अस्माकन्तु विशिष्टा ये तान् निबोध द्विजोत्तम।

---

तदेव वचनमाह पश्यैतामित्यादिभिर्नवभिः श्लोकैः, पश्येत्यादि। हे आचार्य्य! पाण्डवानां महतीं विततां चमूं सेनां पश्य, तव शिष्येण, द्रुपदपुत्त्रेण धृष्टद्युम्नेन व्यूढ़ां व्यूहरचनयाधिष्ठिताम् ॥ ३ ॥

अत्रेत्यादि। अत्रास्यां चम्वाम्। इषवो वाणा अस्यन्ते क्षिप्यन्ते एभिरिति इष्वासा धनूंषि, महान्त इष्वासा येषां ते महेष्वासाः, भीमार्ज्जुनौ तावदत्रातिप्रसिद्धौ योद्धारौ, ताभ्यां समाः शूराः सन्ति। तानेव नामभिर्निर्द्दिशति युयुधान इति। युयुधानः सात्यकिः। किञ्च धृष्टकेतुरिति। चेकितानो नाम एको राजा। नरपुङ्गवः नरश्रेष्ठः शैव्यः। युधामन्युरिति। विक्रान्तो युधामन्युर्नामैकः। सौभद्रोऽभिमन्युः, द्रौपदेयाः द्रौपद्यां पञ्चभ्यो युधिष्ठिरादिभ्यो जाताः पुत्राः प्रतिविन्ध्यादयः पञ्च। महारथादीनां लक्षणम्।—"एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतम् ॥ अमितान् योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः। रथी चैकेन यो योद्धा तन्न्यूनोऽर्द्धरथस्तु सः" ॥ ४—६ ॥

नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥ ७
भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथः ॥ ८
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्व्वे युद्धविशारदाः ॥ ९
अपर्य्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्य्याप्तन्त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १०
अयनेषु च सर्व्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व्व एव हि ॥ ११
तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।

---

अस्माकमिति । निबोध बुध्यस्व । नायका नेतारः । संज्ञार्थं सम्यग्ज्ञानार्थमित्यर्थः ॥ ७ ॥

तानेवाह भवानिति द्वाभ्याम् । भवान् द्रोणः । समितिं संग्रामं जयतीति तथा । सौमदत्तिः सोमदत्तस्य पुत्रो भूरिश्रवाः । मदर्थे मत्प्रयोजनार्थं जीवितं त्यक्तुमध्यवसिता इत्यर्थः । नाना अनेकानि शस्त्राणि प्रहरणसाधनानि येषां ते । युद्धे विशारदा निपुणाः ॥८॥९॥

ततः किम्, अत आह अपर्य्याप्तमित्यादि । तत् तथाभूतैर्वीरैर्युक्तमपि भीष्मेणाभिरक्षितमपि अस्माकं बलं सैन्यं अपर्य्याप्तं तैः सह योद्धुमसमर्थं भाति, इदमेतेषां पाण्डवानां बलंसैन्यं भीमाभिरक्षितं पर्य्याप्तं समर्थं भाति ॥ १० ॥

तस्माद्भवद्भिरेवं वर्त्तितव्यमित्याह अयनेष्विति । अयनेषु व्यूहप्रवेशमार्गेषु यथाभागं विभक्तां स्वां स्वां रणभूमिं अपरित्यज्यावस्थिताः सन्तो भीष्ममेवाभिरक्षन्तु यथान्यैर्युध्यमानः पृष्ठतः कैश्चिन्न हन्येत, तथा रक्षन्तु । भीष्मबलेनैवास्माकं जीवनमिति भावः ॥११॥

सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२

ततः शङ्खाश्च भेर्य्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४

पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा वृकोदरः ॥ १५

अनन्तविजयं राजा कुन्तीपुत्त्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोष-मणिपुष्पकौ ॥ १६

काश्यश्च परमेष्वासः शिखण्डी च महारथः ।

---

तदेवं बहुमानयुक्तं राजवाक्यं श्रुत्वा भीष्मः किं कृतवान्, तदाह तस्येत्यादि। तस्य राज्ञो हर्षं कुर्व्वन् पितामहो भीष्म उच्चैर्महान्तं सिंहनादं कृत्वा शङ्खं दध्मौ वादितवान् ॥ १२ ॥

तदेवं सेनापतेर्भीष्मस्य युद्धोत्सवमालोक्य सर्व्वतो युद्धोत्सवः प्रवृत्त इत्याह तत इत्यादिना । पणवा मर्द्दलाः, आनका गोमुखाश्च वाद्यविशेषाः। सहसा तत्क्षणादेवाभ्यहन्यन्त वादिताः, स शब्दः शङ्खादिशब्दस्तुमुलो महानभूत् ॥ १३ ॥

ततः पाण्डवसैन्ये प्रवृत्तं युद्धोत्सवमाह, तत इत्यादिभिः पञ्चभिः। स्यन्दने रथे स्थितौ सन्तौ श्रीकृष्णार्ज्जुनौ शङ्खौ प्रकर्षेण दध्मतुर्वादयामासतुः ॥ १४ ॥

तदेव विभागेन दर्शयन्नाह पाञ्चजन्यमिति। पाञ्चजन्यादीनि नि श्रीकृष्णादिशङ्खानाम्। भीमं घोरं कर्म्म यस्य सः।

धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७
द्रुपदो द्रौपदेयाश्च सर्व्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक् ॥ १८
स घोषो धार्त्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीञ्चैव तुमुलो व्यनुनादयन् ॥ १९
अथ व्यवस्थितान् दृष्ट्वा धार्त्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ।
हृषीकेशं तदा वाक्यमिदमाह महीपते ॥ २०

अर्ज्जुन उवाच ।

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१
यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२

---

अनन्तेति । नकुलः सुघोषं नाम शङ्खं दध्मौ, सहदेवो मणिपुष्पकं नाम । काश्यश्चेति । काश्यः काशिराजः, कथम्भूतः—परमः श्रेष्ठ इष्वासो धनुर्यस्य सः । द्रुपद इति । हे पृथिवीपते धृतराष्ट्र ! ॥ १५—१८ ॥

स च शङ्खानां नादस्त्वदीयानां महाभयं जनयामासेत्याह स घोष इत्यादि । धार्त्तराष्ट्राणां त्वदीयानां हृदयानि विदारितवान्, किं कुर्व्वन्—नभश्च पृथिवीञ्चाभ्यनुनादयन् प्रतिध्वनिभिरापूरयन् ॥१६॥

एतस्मिन् समये श्रीकृष्णमर्ज्जुनो विज्ञापयामासेत्याह अथेत्यादिभिश्चतुर्भिः श्लोकैः, अथेति । अथानन्तरं व्यवस्थितान् युद्धोद्योगेऽवस्थितान् । कपिध्वजोऽर्ज्जुनः ॥ २० ॥

तदेव वाक्यमाह सेनयोरित्यादि । ननु त्वं योद्धा, न तु युद्ध-

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः।
धार्त्तराष्ट्रस्य दुर्ब्बुद्धेर्युद्धे प्रियचिकीर्षवः॥ २३

सञ्जय उवाच।

एवमुक्तो हृषीकेशो गुडाकेशेन भारत।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम्॥ २४
भीष्मद्रोणप्रमुखतः सर्व्वेषाञ्च महीक्षिताम्।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति॥ २५
तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान्।
आचार्य्यान् मातुलान् भ्रातॄन् पुत्त्रान् पौत्त्रान् सखींस्तथा
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि॥ २६
तान् समीक्ष्य स कौन्तेयः सर्व्वान् बन्धूनवस्थितान्।

---

प्रेक्षकस्तत्राह कैर्मयेत्यादि। कैः सह मया योद्धव्यम्। योत्स्यमानानिति। धार्त्तराष्ट्रस्य दुर्योधनस्य प्रियं कर्त्तुमिच्छन्तो य इह समागतास्तानहं द्रक्ष्यामि यावत्, तावदुभयोः सेनयोर्मध्ये मे रथं स्थापयेत्यन्वयः॥ २१—२३॥

ततः किं वृत्तमित्यपेक्षायां सञ्जय उवाच एवमुक्त इत्यादि। गुडाका निद्रा तस्या ईशेन जितनिद्रेणार्ज्जुनेन एवमुक्तः सन्। हे भारत! हे धृतराष्ट्र! भीष्मेति। महीक्षितां राज्ञाञ्च प्रमुखतः सम्मुखे रथं स्थापयित्वा हे पार्थ! एतान् कुरून् पश्येति श्रीभगवानुवाच॥ २४॥२५॥

ततः किं वृत्तमित्याह तत्रेत्यादि। पितॄन् पितृव्यानित्यर्थः। पुत्त्रान् पौत्त्रानिति दुर्योधनादीनां ये पुत्त्राः, पौत्त्राश्च, तानित्यर्थः। सखीन् मित्राणि। सुहृदः कृतोपकारांश्च अपश्यत्॥ २६॥

कृपया परयाविष्टो विषीदन्निदमब्रवीत् ॥ २७

अर्ज्जुन उवाच।

दृष्ट्वेमान् स्वजनान् कृष्ण युयुत्सून् समवस्थितान्।
सीदन्ति मम गात्राणि मुखञ्च परिशुष्यति ॥ २८
वेपथुश्च शरीरे मे रोमहर्षश्च जायते।
गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ॥ २९
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः।
निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३०
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे।
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ॥ ३१
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा।
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ॥ ३२

---

ततः किं कृतवान् इत्याह तानिति। सेनयोरुभयोरेवं समीक्ष्य कृपया महत्या आविष्टो विषसः सन् इदमर्ज्जुनोऽब्रवीत्। इत्युत्तरस्यार्द्धस्लोकस्य वाक्यार्थः। आविष्टो व्याप्तः ॥ २७ ॥

किमब्रवीदित्यपेक्षायामाह दृष्ट्वेमानित्यादि यावदध्यायसमाप्तिः। हे कृष्ण! योद्धुमिच्छतः पुरतः सम्यगवस्थितान् स्वजनान् बन्धुजनान् दृष्ट्वा मदीयानि गात्राणि करचरणादीनि सीदन्ति विशीर्य्यन्ते। किञ्च वेपथुश्चेत्यादि। वेपथुः कम्पः। रोमहर्षो रोमाञ्चः। स्रंसते निपतति। परिदह्यते सर्व्वतः सन्तप्यते ॥ २८ ॥ २९ ॥

अपिच, न च शक्नोमीत्यादि। विपरीतानि निमित्तानि अनिष्टसूचकानि शकुनादीनि पश्यामि ॥ ३० ॥

किञ्च, नचेत्यादि। आहवे युद्धे स्वजनं हत्वा श्रेयः फलं न पश्यामि। विजयादिकं फलं किं न पश्यसीति चेत्, तत्राह न काङ्क्ष इति ॥ ३१ ॥

त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च।
आचार्य्याः पितरः पुत्त्रास्तथैव च पितामहाः॥ ३३
मातुलाः श्वशुराः पौत्त्राः श्यालाः सम्बन्धिनस्तथा।
एतान् न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन॥ ३४
अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते।
निहत्य धार्त्तराष्ट्रान् नः का प्रीतिः स्याज्जनार्द्दन॥ ३५
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः।
तस्मान्नार्हा वयं हन्तुं धार्त्तराष्ट्रान् स्वबान्धवान्।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव॥ ३६

---

एतदेव प्रपञ्चयति किं नो राज्येन इत्यादिसार्द्धद्वयेन। त इम इति। यदर्थमस्माकं राज्यादिकमपेक्षितं, ते एते प्राणधनादित्यागमङ्गीकृत्य युद्धार्थमवस्थिताः, अतः किमस्माकं राज्यादिभिः कृत्यमित्यर्थः। ननु यदि कृपया त्वमेतान् न हंसि, तर्हि त्वामेते राज्यलोभेन हनिष्यन्त्येव, अतस्त्वमेवैतान् हत्वा राज्यं भुङ्क्ष्वेति, तत्राह एतानित्यादि सार्द्धेन। घ्नतोऽपि अस्मान् मारयतोऽपि एतान्। अपीति। त्रैलोक्यराज्यस्यापि हेतोः तत्प्राप्त्यर्थमपि हन्तुं नेच्छामि, किं पुनर्महीमात्रप्राप्तये इत्यर्थः॥ ३२—३५॥

ननु च "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहारी च षडेते आततायिनः" इति स्मरणादग्निदाहादिभिः षड्भिर्हेतुभिरेते तावदाततायिनः, आततायिनाञ्च वधो युक्त एव। "आततायिनमायान्तं हन्यादेवाविचारयन्। नाततायिवधे दोषो हन्तुर्भवति कश्चन" इति वचनात्। तत्राह पापमेवेत्यादि सार्द्धेन। "आततायिनमायान्तम्" इत्यादिकमर्थशास्त्रं, तच्च धर्म्मशास्त्रात्तु दुर्ब्बलम्। यथोक्तं याज्ञवल्क्येन,—"स्मृत्योर्विरोधे न्यायस्तु

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्॥ ३७
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्त्तितुम्।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्द्दन॥ ३८
कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः।
धर्म्मे नष्टे कुलं कृत्स्नमधर्म्मोऽभिभवत्युत॥ ३९
अधर्म्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः॥ ४०
सङ्करो नरकायैव कुलघ्नानां कुलस्य च।

---

बलवान् व्यवहारतः। अर्थशास्त्रात् तु बलवद्धर्म्मशास्त्रमिति स्थितिः" इति। तस्मादाततायिनामप्येतेषामाचार्य्यादीनां वधेऽस्माकं पापमेव भवेत्। अन्याय्यत्वात् अधर्म्मत्वाच्चैतद्वधस्य अमुत्र चेह वा न सुखं स्यादित्याह स्वजनं हीति॥ ३६॥

ननु चैतेषामपि बन्धुवधदोषे समाने यथैवैते बन्धुवधमङ्गीकृत्यापि युद्धे प्रवर्त्तन्ते, तथैव भवानपि प्रवर्त्ततां, किमनेन विषादेनेत्याह यद्यपीति द्वाभ्याम्। राज्यलोभेनोपहतं भ्रष्टविवेकं चेतो येषां ते एते दुर्य्योधनादयो यद्यपि दोषं न पश्यन्ति। कथमिति। तथाप्यस्माभिर्दोषं प्रपश्यद्भिरस्मात् पापात् निवर्त्तितुं कथं न ज्ञेयं, निवृत्तावेव बुद्धिः कर्त्तव्येत्यर्थः॥ ३७॥३८॥

तमेव दोषं दर्शयति कुलक्षय इत्यादि। सनातनाः परम्पराप्राप्ताः। उत अपि अवशिष्टं कृत्स्नमपि कुलं अधर्म्मोऽभिभवति प्राप्नोतीत्यर्थः॥ ३९॥

ततश्च अधर्म्माभिभवादित्यादि॥ ४०॥

पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४१
दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः ॥ ४२
उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४३
अहोबत महत् पापं कर्त्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४४
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्त्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४५

---

एवं सति सङ्कर इत्यादि । एषां कुलघ्नानां पितरः पतन्ति, हि यस्मात् लुप्ताः पिण्डोदकक्रियाः येषां ते तथा ॥ ४१ ॥

उक्तदोषमुपसंहरति दोषैरित्यादि द्वाभ्याम् । उत्साद्यन्ते लुप्यन्ते । जातिधर्म्मा वर्णधर्म्माः । कुलधर्म्माश्चेति चकारादाश्रमधर्म्मादयोऽपि गृह्यन्ते ॥ ४२ ॥

उत्सन्नेति । उत्सन्नाः कुलधर्म्माः येषामिति उत्सन्नजातिधर्म्मादीनामप्युपलक्षणम् । अनुशुश्रुम श्रुतवन्तो वयम् । "प्रायश्चित्तमकुर्व्वाणाः पापेष्वभिरता नराः । अपश्चात्तापिनः पापात् निरयान् यान्ति दारुणान्" इत्यादि वचनेभ्यः ॥ ४३ ॥

बन्धुवधाध्यवसायेन सन्तप्यमान आह अहोबतेत्यादि । स्वजनं हन्तुमुद्यता इति यत्, एतन्महत् पापं कर्त्तुमध्यवसायं कृतवन्तो वयम् अहोबत महत् कष्टमित्यर्थः ॥ ४४ ॥

एवं सन्तप्तः सन् मृत्युमेवाशंसमान आह यदि मामित्यादि । अकृतप्रतीकारं तूष्णीमुपविष्टं मां यदि हनिष्यन्ति, तर्हि तद्धननं मम क्षेमतरम् अत्यन्तं हितं भवेत् पापानिष्पत्तेः ॥ ४५ ॥

सञ्जय उवाच ।

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४६

इति श्रीमहाभारते शतसाहस्र्यां संहितायां
वैयासिक्यां भीष्मपर्व्वणि श्रीमद्भगवद्गीता-
सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्ज्जुनसंवादेऽर्ज्जुनविषादो
नाम प्रथमोऽध्यायः ॥ १ ॥

---

ततः किं वृत्तमित्यपेक्षायां सञ्जय उवाच—एवमुक्त्वेत्यादि । संख्ये संग्रामे रथोपस्थे रथस्योपरि उपाविशत् उपविवेश । शोकेन संविग्नं प्रकम्पितं मानसं यस्य सः ॥ ४६ ॥

इति श्रीभगवद्गीतास्वामिकृतटीकायां सैन्यदर्शनो नाम
प्रथमोऽध्यायः ॥ १ ॥



# द्वितीयोऽध्यायः ।

सञ्जय उवाच ।

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १

श्रीभगवानुवाच ।

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्य्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्ज्जुन ॥ २

क्लैव्यं मास्म गमः पार्थ नैतत् त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्ब्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३

अर्ज्जुन उवाच ।

कथं भीष्ममहं संख्ये द्रोणञ्च मधुसूदन ।

---

द्वितीये शोकसन्तप्तमर्ज्जुनं ब्रह्मविद्यया ।
प्रतिबोध्य हरिश्चक्रे स्थितप्रज्ञस्य लक्षणम् ॥

ततः किं वृत्तमित्यपेक्षायां सञ्जय उवाच—तं तथेत्यादि । अश्रुभिः पूर्णे आकुले ईक्षणे यस्य तं तथा उक्तप्रकारेण विषीदन्तमर्ज्जुनं प्रति मधुसूदन इदं वाक्यमुवाच ॥ १ ॥

तदेव वाक्यमाह कुत इति । कुतो हेतोस्त्वा त्वां विषमे सङ्कटे इदं कश्मलमुपस्थितम् अयं मोहः प्राप्तः, यत आर्य्यैरसेवितम्, अस्वर्ग्यम् अधर्म्म्यम्, अयशस्करञ्च ॥ २ ॥

क्लैव्यं मास्मेति । तस्मात् हे पार्थ ! क्लैव्यं कातर्य्यं मास्म गमः न प्राप्नुहि । यतस्त्वयि एतन्नोपपद्यते योग्यं न भवति । क्षुद्रं तुच्छं हृदयदौर्ब्बल्यं कातर्य्यं त्यक्त्वा युद्धायोत्तिष्ठ हे परन्तप शत्रु-तापन ! ॥ ३ ॥

नाहं कातरत्वेन युद्धादुपरतोऽस्मि, किन्तु युद्धस्यान्याय्यत्वादधर्म्म-

इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४
गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५
न चैतद्विद्मः कतरन्नोगरीयो
यद्वा जयेम यदि वा नो जयेयुः।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्त्तराष्ट्राः ॥ ६

---

त्याचेत्याह अर्ज्जुन उवाच कथमिति। भीष्मद्रोणौ पूजार्हौ पूजाया-मर्हौ योग्यौ, तौ प्रति कथमहं योत्स्यामि, तत्रापीषुभिर्यत्र वाचापि योत्स्यामीति वक्तुमनुचितं, तत्र वाणैः कथं योत्स्यामीत्यर्थः। हे अरिसूदन! शत्रुविमर्द्दन! ॥ ४ ॥

तर्हि तानहत्वा तव देहयात्रापि न स्यादिति चेत्, तत्राह गुरू-निति। गुरून् द्रोणाचार्य्यादीनहत्वा परलोकविरुद्धं गुरुवधमकृत्वा इह लोके भिक्षान्नमपि भोक्तुं श्रेय उचितम्। विपक्षे तु न केवलं परत्र दुःखं, किन्त्विहैव च नरकदुःखमनुभवेयमित्याह हत्वेति। गुरून् हत्वा इहैव रुधिरेण प्रदिग्धान् प्रकर्षेण लिप्तान् अर्थकामा-त्मकान् भोगानहं भुञ्जीय अश्नीयाम्। यद्वा अर्थकामानिति गुरूणां विशेषणम्। अर्थतृष्णाकुलत्वादेते तावद्युद्धान्न निवर्त्तेरन्, तस्मादे-तद्वधः प्रसज्येतैवेत्यर्थः। तथाच युधिष्ठिरं प्रति भीष्मेणोक्तम्,— "अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्। इति सत्यं महाराज! बद्धोऽस्म्यर्थेन कौरवैः" ॥ ५ ॥

किञ्च यद्यधर्म्ममङ्गीकरिष्यामः, तथापि किमस्माकं जयः परा-

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्म्मसंमूढ़चेताः।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्॥ ७

न हि प्रपश्यामि ममापनुद्यात्
यच्छोकमुच्छोषणमिन्द्रियाणाम्।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम्॥ ८

---

जयो वा गरीयान् भवेदिति न ज्ञायत इत्याह न चैतदित्यादि। द्वयो-र्मध्ये नोऽस्माकं कतरत् किं नाम गरीयोऽधिकतरं भविष्यतीति न विद्मः। तदेव द्वयं दर्शयति यद्वेति। यद्वा एतान् वयं जयेम जेष्यामः, यदिवा नोऽस्मानेते जयेयुर्जेष्यन्तीति। किञ्चास्माकं जयोऽपि फलतः पराजय एवेत्याह यानिति। यानेव हत्वा जीवितुं नेच्छामस्त एवेते सम्मुखेऽवस्थिताः॥ ६॥

कार्पण्येत्यादि। तस्मादेतान् हत्वा कथं जीविष्याम इति कार्पण्यं, दोषश्च कुलक्षयकृतः, ताभ्यामुपहतोऽभिभूतः स्वभावः शौर्य्यलक्षणो यस्य सोऽहं त्वां पृच्छामि, तथा धर्म्मे संमूढ़ं चेतो यस्य सः, युद्धं त्यक्त्वा भिक्षाटनमपि क्षत्रियस्य धर्म्मोऽधर्म्मो वेति सन्दिग्धचित्तः सन्नित्यर्थः। अतो मे यन्निश्चितं श्रेयः स्यात् तद्ब्रूहि। किञ्च तेऽहं शिष्यः शासनार्हः, अतस्त्वां प्रपन्नं शरणं गतं मां शाधि शिक्षय॥ ७॥

त्वमेव विचार्य्य यद्युक्तं, तत् कुर्व्विति चेत्, तत्राह नहि प्रपश्या-मीति। इन्द्रियाणामुच्छोषणमतिशोषकरं मदीयं शोकं यत् कर्म्मा-पनुद्यात् अपनयेत्, तदहं न पश्यामीति। यद्यपि भूमौ निष्कण्टकं

सञ्जय उवाच ।

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १०

श्रीभगवानुवाच ।

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११

---

सम्हद्धं राज्यं प्राप्स्यामि, तथा सुरेन्द्रत्वमपि यदि प्राप्स्यामि, एवमभीष्टं तत्तत् सर्व्वमवाप्यापि शोकापनोदनोपायं न प्रपश्यामीत्यन्वयः ॥ ८ ॥

एवमुक्त्वार्ज्जुनः किं कृतवानित्यपेक्षायां सञ्जय उवाच एवमित्यादि ॥ ९ ॥

ततः किं वृत्तमित्याह तमुवाचेति । प्रहसन्निवेति । प्रसन्नमुखः सन्नित्यर्थः ॥ १० ॥

देहात्मनोरविवेकादस्यैवं शोको भवतीति तद्विवेकदर्शनार्थं श्रीभगवानुवाच अशोच्यानित्यादि । शोकस्याविषयीभूतानेव बन्धून् अन्वशोचः अनुशोचितवानसि "दृष्ट्वेमान् स्वजनान् कृष्ण" इत्यादिना । तत्र "कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्" इत्यादिना मया बोधितोऽपि पुनश्च प्रज्ञावतां पण्डितानां वादान् शब्दान् "कथं भीष्ममहं सङ्ख्ये" इत्यादीन् केवलं भाषसे, न तु पण्डितोऽसि, यतः पण्डिता गतासून् गतप्राणान् बन्धून्, अगतासूंश्च जीवतोऽपि "बन्धुहीना एते कथं जीविष्यन्ती"ति नानुशोचन्ति । पण्डिता विवेकिनः ॥ ११ ॥

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्व्वे वयमतःपरम् ॥ १२
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३
मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४

---

अशोच्यत्वे हेतुमाह नत्वेवाहमिति। यथाहं परमेश्वरो जातु कदाचित् लीलाविग्रहस्याविर्भावतिरोभावतो नासमिति तु नैव, अपित्वासमेव अनादित्वात्, न च त्वं नासीः नाभूः, अपित्वासीरेव, इमे वा जनाधिपा नृपा नासन्निति न, अपित्वासन्नेव मदंशत्वात्, तथातः परम् इत उपर्य्यपि न भविष्यामो न स्यास्याम इति च नैव, अपितु स्यास्याम एवेति जन्ममरणशून्यत्वादशोच्या इत्यर्थः ॥ १२ ॥

नन्वीश्वरस्य तव जन्मादिशून्यत्वं सत्यमेव, जीवानान्तु जन्ममरणे प्रसिद्धे, तत्राह देहिन इत्यादि। देहिनो देहाभिमानिनो जीवस्य यथास्मिन् स्थूलदेहे कौमाराद्यवस्थास्तद्देहनिबन्धना एव, न तु स्वतः, पूर्व्वावस्थानाशेऽवस्थान्तरोत्पत्तावपि स एवाहमिति प्रत्यभिज्ञानात्, तथैव एतद्देहनाशे देहान्तरप्राप्तिरपि लिङ्गदेहनिबन्धनैव। न तावदात्मनो नाशः, जातमात्रस्य पूर्व्वसंस्कारेण स्तन्यपानादौ प्रवृत्तिदर्शनात्। अतो धीरो धीमान् तत्र तयोर्देहनाशोत्पत्त्योर्न मुह्यति आत्मैव मृतो जातश्चेति न मन्यते ॥ १३ ॥

ननु तानहं न शोचामि, किन्तु तद्वियोगादिदुःखभाजं मामेवेति चेत् तत्राह मात्रास्पर्शा इति। मीयन्ते ज्ञायन्ते विषया आभिरिति मात्रा इन्द्रियवृत्तयः, तासां स्पर्शा विषयेषु सम्बन्धाः, ते शीतोष्णादिप्रदा भवन्ति, ते त्वागमापायवत्त्वादनित्या अस्थिराः अतस्तान्

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५**
**नासतो विद्यते भावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६**
**अविनाशि तु तद्विद्धि येन सर्व्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित् कर्त्तुमर्हति ॥ १७**

---

तितिक्षस्व सहस्व, यथा जलातपादिसंसर्गास्तत्तत्कालकृताः स्वभावतः शीतोष्णादि प्रयच्छन्ति, एवमिष्टसंयोगवियोगा अपि सुखदुःखादि प्रयच्छन्ति, तेषाञ्चास्थिरत्वात् सहनं तव धीरस्योचितं, न तु तन्निमित्तहर्षविषादपारवश्यमित्यर्थः ॥ १४ ॥

तत्प्रतीकारप्रयत्नादपि तत्सहनमेवोचितं महाफलत्वादित्याह यं हीत्यादि । एते मात्रास्पर्शा यं पुरुषं न व्यथयन्ति नाभिभवन्ति, समे दुःखसुखे यस्य स तम् । तैरविक्षिप्यमाणो धर्म्मज्ञानद्वारा अमृतत्वाय मोक्षाय कल्पते योग्यो भवति ॥ १५ ॥

ननु तथापि शीतोष्णादिकमतिदुःसहं कथं सोढ़व्यम्, अत्यन्तं तत्सहने च कदाचिदात्मनो नाशः स्यादित्याशङ्क्य तत्त्वविचारतः सर्व्वं सोढ़ुं शक्यमित्याशयेनाह नासतो विद्यते इति । असतोऽनात्म-धर्म्मत्वादविद्यमानस्य शीतोष्णादेरात्मनि भावः सत्ता न विद्यते, तथा सतः सत्स्वभावस्यात्मनोऽभावो नाशो न विद्यते, एवमुभयोः सदसतोरन्तो निर्णयो दृष्टः, कैस्तत्त्वदर्शिभिः वस्तुयाथार्थ्यवेदिभिः । एवम्भूतविवेकेन सहस्वेत्यर्थः ॥ १६ ॥

तत्र सत्स्वभावमविनाशि वस्तु सामान्येनोक्तं, विशेषतो दर्शयति अविनाशि त्विति । येन सर्व्वमिदमागमापायधर्म्मात्मकं देहादि ततं साक्षित्वेन व्याप्तं, तत् तु आत्मस्वरूपम् अविनाशि विनाशशून्यं विद्धि जानीहि । तत्र हेतुमाह विनाशमिति ॥ १७ ॥

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
अनाशिनोऽप्रमेयस्य तस्माद् युध्यस्व भारत ॥ १८

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २०

---

आगमापायधर्म्मकं सन्दर्शयति अन्तवन्त इति। नित्यस्य सर्व्वदैकरूपस्य, अतएवाविनाशिनः अप्रमेयस्यापरिच्छिन्नस्यात्मन इमे सुखदुःखादिधर्म्मका देहा उक्तास्तत्त्वदर्शिभिः। यस्मादेवात्मनो न विनाशः, न च सुखदुःखादिसम्बन्धः, तस्मान्मोहजं शोकं त्यक्त्वा युध्यस्व, स्वधर्म्मं मा त्याक्षीरित्यर्थः ॥ १८ ॥

तदेवं भीष्मादिमृत्युनिमित्तशोको निवारितः, यच्चात्मनो हन्तृत्वनिमित्तं दुःखमुक्तम् "एतान् न हन्तुमिच्छामी"त्यादिना, तदपि तद्वदेव निर्निमित्तमित्याह य एनमिति। एनमात्मानम्। आत्मनो हननक्रियायां कर्म्मत्ववत् कर्त्तृत्वमपि नास्तीत्यर्थः। तत्र हेतुर्नायमिति ॥ १९ ॥

न हन्यत इत्येतदेव षड्भावविकारशून्यत्वेन द्रढयति न जायत इत्यादि। न जायत इति जन्मप्रतिषेधः। न म्रियते चेति विनाशप्रतिषेधः। वा शब्दश्चार्थे। न चायं भूत्वा उत्पद्य भविता भवति अस्तित्वं भजते, किन्तु प्रागेव स्वतः सद्रूप इति जन्मानन्तरास्तित्वलक्षणद्वितीयविकारप्रतिषेधः, तत्र हेतुः—यस्मादजः, यो हि जायते स हि जन्मानन्तरमस्तित्वं भजते, न तु यः स्वत एवास्ति स भूयोऽप्यन्यदस्तित्वं भजत इत्यर्थः। नित्यः सर्व्वदैकरूप इति वृद्धि-

वेदाविनाशिनं नित्यं य एनमजमव्ययम्।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम्॥ २१

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही॥ २२

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥ २३

---

प्रतिषेधः। शाश्वतः शश्वद्भव इत्यपक्षयप्रतिषेधः। पुराण इति परिणामप्रतिषेधः। पुरापि नव एव, न तु परिणामतो रूपान्तरं प्राप्य नवो भवतीत्यर्थः॥ २०॥

अतएव हन्तृत्वाभावोऽपि पूर्व्वोक्तः सिद्ध इत्याह वेदाविनाशिनमित्यादि। नित्यं वृद्धिशून्यम् अव्ययम् अपक्षयशून्यम् अजमविनाशिनञ्च यो वेद, स पुरुषः कं हन्ति कथं वा हन्ति एवम्भूतस्य वधे साधनाभावात्। तथा स्वयं प्रयोजको भूत्वा अन्येन कं घातयति कथं वा घातयति न कञ्चिदपि कथञ्चिदपीत्यर्थः। अनेन मय्यपि प्रयोजकत्वदोषदृष्टिं मा कार्षीरित्युक्तं भवति॥ २१॥

नन्वात्मनोऽविनाशेऽपि तदीयशरीरनाशं पर्य्यालोच्य शोचामीति चेत् तत्राह वासांसीत्यादि। कर्म्मनिबन्धनानां देहानामवश्यम्भावित्वाच्च तज्जीर्णदेहनाशे शोकानवकाश इत्यर्थः॥ २२॥

कथं हन्ति इत्यनेनोक्तं वधसाधनाभावं दर्शयन्नविनाशित्वमात्मनः स्फुटीकरोति नैनमित्यादि। आपो न क्लेदयन्ति मृदुकरणेन शिथिलं न कुर्व्वन्ति॥ २३॥

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्व्वगतः स्थाणुरचलोऽयं सनातनः ।
अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते ॥ २४
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७

---

तत्र हेतुमाह अच्छेद्य इत्यादिना सार्द्धेन। निरवयवत्वात् अच्छेद्योऽक्लेद्यश्च। अमूर्त्तत्वाददाह्यः। द्रवत्वाभावादशोष्य इति। इतश्च छेदादियोग्यो न भवति, यतो नित्यः अविनाशी, सर्व्वगतः। स्थाणुः स्थिरस्वभावः रूपान्तरापत्तिशून्यः। अचलः पूर्व्वरूपापरित्यागी। सनातनोऽनादिः। अव्यक्तश्चक्षुराद्यविषयः। अचिन्त्यः मनसोऽप्यविषयः। अविकार्य्यः कर्म्मेन्द्रियाणामप्यगोचर इत्यर्थः। उच्यत इति नित्यत्वादभियुक्तोक्तिं प्रमाणयति ॥ २४ ॥

उपसंहरति तस्मादेवमित्यादि। तदेवात्मनो जन्मविनाशाभावान्न शोकः कार्य्य इत्युक्तम् ॥ २५ ॥

इदानीं देहेन सहात्मनो जन्म, तद्विनाशे च विनाशमङ्गीकृत्यापि शोको न कार्य्य इत्याह अथ चैनमित्यादि। अथ यद्यपि एनमात्मानं नित्यं सर्व्वदा तत्तद्देहे जाते जातं मन्यसे, तथा तत्तद्देहे मृते मृतञ्च मन्यसे पुण्यपापयोस्तत्फलभूतयोश्च जन्ममरणयोरात्मगामित्वात्, तथापि त्वं शोचितुं नार्हसि ॥ २६ ॥

कुत इत्यत आह जातस्य हीत्यादि। हि यस्माज्जातस्य स्वारम्भककर्म्मक्षये मृत्युर्ध्रुवो निश्चितः, मृतस्य च तद्देहकृतेन कर्म्मणा

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना॥ २८

आश्चर्य्यवत् पश्यति कश्चिदेन-
माश्चर्य्यवद्वदति तथैव चान्यः।
आश्चर्य्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित्॥ २९

---

जन्मापि ध्रुवमेव, तस्मादेवमपरिहार्य्येऽर्थेऽवश्यम्भाविनि जन्ममरण-लक्षणेऽर्थे त्वं विद्वान् शोचितुं योग्यो न भवसि॥ २७॥

किञ्च देहादीनां स्वभावं पर्य्यालोच्य तदुपाधिके आत्मनो जन्म-मरणे शोको न कार्य्य इत्यत आह अव्यक्तादीनीत्यादि। अव्यक्तं प्रधानं, तदेवादि उत्पत्तेः पूर्व्वरूपं येषां तान्यव्यक्तादीनि भूतानि शरीराणि कारणात्मना स्थितानामेवोत्पत्तेः। तथा व्यक्तम् अभिव्यक्तं मध्यं जन्ममरणान्तरालं स्थितिलक्षणं येषां तानि व्यक्तमध्यानि। अव्यक्ते निधनं लयो येषां तानीमान्येवंभूतान्येव, तत्र तेषु का परि-देवना कः शोकनिमित्तो विलापः। प्रतिबुद्धस्य स्वप्नदृष्टवस्तुष्विव शोको न युज्यत इत्यर्थः॥ २८॥

कुतस्तर्हि विद्वांसोऽपि लोके शोचन्ति, आत्माज्ञानादेव इत्या-शयेनात्मनो दुर्व्विज्ञेयतामाह आश्चर्य्यवदित्यादि। कश्चिदेनमात्मानं शास्त्राचार्य्योपदेशाभ्यां पश्यन्नाश्चर्य्यवत् पश्यति सर्व्वगतस्य नित्य-ज्ञानानन्दस्वभावस्यात्मनोऽलौकिकत्वादैन्द्रजालिकवद्घटमानं पश्य-न्निव विस्मयेन पश्यति असम्भावनाभिभूतत्वात्, तथा आश्चर्य्यव-देवान्यो वदति, शृणोति चान्यः, कश्चित् पुनर्विपरीतभावनाभिभूतः श्रुत्वापि नैव वेद। च शब्दादुक्त्वापि दृष्ट्वापि न सम्यग्वेदेति द्रष्टव्यम्॥ २९॥

देही नित्यमवध्योऽयं देहे सर्व्वस्य भारत ।
तस्मात् सर्व्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३०

स्वधर्म्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३१

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२

अथ चेत् त्वमिमं धर्म्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्म्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि ॥ ३३

अकीर्त्तिञ्चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते ॥ ३४

---

तदेवमवध्यत्वमात्मनः संक्षेपेणोपदिश्यान्यशोच्यत्वमुपसंहरति देहीत्यादि ॥ ३० ॥

यथोक्तमर्ज्जुनेन "वेपथुश्च शरीरे मे" इत्यादि, तदप्ययुक्तमित्याह स्वधर्म्ममपीति । आत्मनो नाशाभावादेवैतेषां हननेऽपि विकम्पितुं नार्हसि, किञ्च स्वधर्म्ममप्यवेक्ष्य विकम्पितुं नार्हसीति सम्बन्धः । यथोक्तं "नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे" इति, तत्राह धर्म्म्यादिति । धर्म्मादनपेतान्न्याय्याद्युद्धादन्यत् ॥ ३१ ॥

किञ्च महति श्रेयसि स्वयमेवोपागते कुतो विकम्पसे इत्याह यदृच्छयेति । यदृच्छया अप्रार्थितमेवोपपन्नं प्राप्तमीदृशं युद्धं सुखिनः सुभाग्या एव लभन्ते, यतोऽनिवारणं स्वर्गद्वारमेवैतत् । एतेन "स्वजनं हि कथं हत्वा सुखिनः स्याम माधवे"ति यदुक्तं, तन्निरस्तं भवति ॥ ३२ ॥

विपर्य्यये दोषमाह अथ चेदित्यादि ॥ ३३ ॥

किञ्चाकीर्त्तिमित्यादि । अव्ययां शाश्वतीम् । सम्भावितस्य बहुमतस्य । अतिरिच्यते अधिका भवति ॥ ३४ ॥

यादृणादुपरतं मंस्यन्ते त्वां महारथाः।
येषाञ्च त्वं बहुमतो भूत्वा यास्यसि लाघवम्॥ ३५
अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्॥ ३६
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥ ३७
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥ ३८
एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि॥ ३९

---

किञ्च भयादिति। येषां बहुगुणत्वेन त्वं पूर्व्वं सम्मतोऽभूस्तएव भयात् संग्रामात् त्वां निवृत्तं मन्येरन्, ततश्च पूर्व्वं बहुमतो भूत्वा लाघवं यास्यसि॥ ३५॥

किञ्च अवाच्यवादांश्चेत्यादि। अवाच्यान् वादान् वचनानर्हान् शब्दान् तवाहिताः तच्छत्रवो वदिष्यन्ति॥ ३६॥

यदुक्तं "नचैतद्विद्म" इति, तत्राह हतो वेत्यादि। पक्षद्वयेऽपि तव लाभ एवेत्यर्थः॥ ३७॥

यदप्युक्तं "पापमेवाश्रयेदस्मान्" इति, तत्राह सुखदुःखे इत्यादि। सुखदुःखे समे कृत्वा, तथा तयोश्च कारणभूतौ लाभालाभावपि, तत्कारणभूतौ जयाजयावपि समौ कृत्वा, एतेषां समत्वे कारणं हर्षविषादराहित्यम्। युज्यस्व सन्नद्धो भव सुखदुःखाद्यभिलाषं हित्वा स्वधर्म्मबुद्ध्या युध्यमानः पापं न प्राप्स्यसीत्यर्थः॥ ३८॥

उपदिष्टं ज्ञानयोगमुपसंहरन् कर्म्मयोगं प्रस्तौति एषेत्यादि। सम्यक् ख्यायते वस्तुतत्त्वमनयेति संख्या सम्यक् ज्ञानं तस्यां प्रकाश्-

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात्॥ ४०
व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्॥ ४१

---

मानमात्मतत्त्वं सांख्यं, तस्मिन् करणीया बुद्धिरेषा तवाभिहिता, एवमभिहितायामपि तव चेदात्मतत्त्वमपरोक्षं न भवति, तर्ह्यन्तः-करणशुद्धिद्वारात्मतत्त्वापरोक्षार्थं कर्म्मयोगे त्विमां बुद्धिं शृणु, यया बुद्ध्या युक्तः परमेश्वरार्पितकर्म्मयोगेण शुद्धान्तःकरणः संस्तत्प्रसादलब्धापरोक्षज्ञानेन कर्म्मात्मकं बन्धं प्रकर्षेण हास्यसि त्यक्ष्यसि॥ ३९॥

ननु कृष्यादिवत् कर्म्मणां कदाचिद्विघ्नबाहुल्येन फले व्यभिचारात्मन्त्राद्यङ्गवैगुण्येन च प्रत्यवायसम्भवात् कुतः कर्म्मयोगेण कर्म्मबन्ध-प्रहाणं, तत्राह नेहेत्यादि। इह निष्कामकर्म्मयोगेऽभिक्रमस्य प्रारम्भस्य नाशो निष्फलत्वं नास्ति प्रत्यवायश्च न विद्यते ईश्वरोद्देशेनैव-विघ्नवैगुण्याद्यसम्भवात्। किञ्चास्य धर्म्मस्य ईश्वराराधनार्थकर्म्म-योगस्य स्वल्पमपि कृतं महतो भयात् संसारात् त्रायते रक्षति, न तु काम्यकर्म्मवत् किञ्चिदङ्गवैगुण्यादिना नैष्फल्यमस्येत्यर्थः॥ ४०॥

कुत इत्यपेक्षायामुभयोर्वैषम्यमाह व्यवसायात्मिकेति। इह ईश्वराराधनलक्षणे कर्म्मयोगे व्यवसायात्मिका परमेश्वरभक्त्यैव ध्रुवं तरिष्यामीति निश्चयात्मिका एकैव एकनिष्ठैव बुद्धिर्भवति। अव्य-वसायिनान्तु ईश्वराराधनवहिर्म्मुखाणां कामिनां कामानामानन्त्या-दनन्तास्तत्रापि कर्म्मफलगुणफलादिप्रकारभेदाद्बहुशाखाश्च बुद्धयो भवन्ति। ईश्वराराधनार्थं हि नित्यं नैमित्तिकञ्च कर्म्म किञ्चिदङ्ग-

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीतिवादिनः ॥ ४२
कामात्मानः स्वर्गपरा जन्मकर्म्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्य्यगतिं प्रति ॥ ४३
भोगैश्वर्य्यप्रसक्तानां तयापहृतचेतसाम् ।

---

वैगुण्येऽपि न नश्यति, यथा शक्नुयात् तथा कुर्य्यादिति तद्विधीनां नच वैगुण्यमपि ईश्वरोद्देशेनैव वैगुण्योपशमात्, न तु तथा काम्यं कर्म्म, अतो महद्वैषम्यमिति भावः ॥ ४१ ॥

ननु कामिनोऽपि कष्टान् कामान् विहाय व्यवसायात्मिकामेव बुद्धिं किं न कुर्व्वन्ति ? तत्राह यामिमामित्यादि। यामिमां पुष्पितां विषलतावदापातरमणीयां प्रकृष्टां परमार्थफलपरामेव वदन्ति वाचं स्वर्गादिफलश्रुतिं, तेषां तया वाचापहृतचेतसां व्यवसायात्मिका बुद्धिर्न समाधौ विधीयते इति तृतीयेनान्वयः। किमिति तथा वदन्ति, यतोऽविपश्चितो मूढ़ास्तत्र हेतुः वेदवादरता इति, वेदे ये वादा अर्थवादा "अक्षय्यं ह वै चातुर्म्मास्ययाजिनः सुकृतं भवति"। तथा "अपाम सोमममृता अभूम" इत्याद्याः, तेष्वेव रताः प्रीताः, अतएव अतः परमन्यदीश्वरतत्त्वं प्राप्यं नास्तीति वदनशीलाः। अतएव कामात्मान इति, कामात्मानः कामाकुलितचित्ताः, अतः स्वर्ग एव परः पुरुषार्थो येषां ते। जन्म च तत्र कर्म्माणि च तत्फलानि च प्रददातीति तथा तां, भोगैश्वर्य्ययोर्गतिं प्राप्तिं प्रति साधनभूता ये क्रियाविशेषास्ते बहुला यस्यां तां प्रवदन्तीत्यनुषङ्गः ॥ ४२ ॥ ४३ ॥

ततश्च भोगैश्वर्य्यप्रसक्तानामित्यादि। भोगैश्वर्य्ययोः प्रसक्तानामभिनिविष्टानां तया पुष्पितया वाचा अपहृतमाकृष्टं चेतो येषाम्।

व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्ज्जुन।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५
यावानर्थ उदपाने सर्व्वतः संप्लुतोदके।
तावान् सर्व्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६

---

समाधिश्चित्तैकाग्र्यं परमेश्वराभिमुखत्वमिति यावत्, तस्मिन् निश्चयात्मिका बुद्धिस्तु न विधीयते। कर्म्मकर्त्तरि प्रयोगः। सा नोत्पद्यत इति भावः ॥ ४४ ॥

ननु स्वर्गादिकं परमं फलं यदि न भवति, तर्हि किमिति वेदैस्तत्साधनतया कर्म्माणि विधीयन्ते ? तत्राह त्रैगुण्यविषया इति। त्रिगुणात्मकाः सकामा येऽधिकारिणस्तद्विषयाः कर्म्मफलसम्बन्धप्रतिपादका वेदाः, त्वन्तु निस्त्रैगुण्यो निष्कामो भव। तत्रोपायमाह,—निर्द्वन्द्वः सुखदुःखशीतोष्णादियुगलानि द्वन्द्वानि, तद्रहितो भव तानि सहस्वेत्यर्थः। कथमित्यत आह,—नित्यसत्त्वस्थः धैर्य्यमवलम्ब्येत्यर्थः। तथा निर्योगक्षेमः, अप्राप्तस्वीकारो योगः, प्राप्तपालनं क्षेमस्तद्रहितः, आत्मवानप्रमत्तः, न हि द्वन्द्वाकुलस्य योगक्षेमव्यापृतस्य च प्रमादिनस्त्रैगुण्यातिक्रमः सम्भवतीति ॥ ४५ ॥

ननु वेदोक्तनानाफलत्यागेन निष्कामतयेश्वराराधनविषया व्यवसायात्मिका बुद्धिः कुबुद्धिरेवेत्याशङ्क्याह यावानिति। उदकं पीयते यस्मिंस्तदुदपानं वापीकूपतडागादि, तस्मिन् स्वल्पोदके एकत्र कृत्स्नार्थस्यासम्भवात् तत्र तत्र परिभ्रमणेन विभागशो यावान् स्नानपानादिरर्थः प्रयोजनं भवति, तावान् सर्व्वोऽप्यर्थः सर्व्वतः संप्लुतोदके महाह्रदे एकत्रैव यथा भवति एवं यावान् सर्व्वेषु वेदेषु तत्तत्कर्म्मफलरूपोऽर्थस्तावान् सर्व्वोऽपि विजानतो व्यवसायात्मिकाबुद्धियुक्तस्य

कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणि ॥ ४७
योगस्थः कुरु कर्म्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८
दूरेण ह्यवरं कर्म्म बुद्धियोगाद्धनञ्जय ।

---

ब्राह्मणस्य ब्रह्मनिष्ठस्य भवत्येव ब्रह्मानन्दे क्षुद्रानन्दानामन्तर्भावात्, "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः। तस्मादियमेव बुद्धिः सुबुद्धिरित्यर्थः ॥ ४६ ॥

तर्हि सर्व्वाणि कर्म्मफलानि परमेश्वराराधनादेव भविष्यन्तीत्यभिसन्धाय प्रवर्त्तेत, किं कर्म्मणेत्याशङ्क्य तद्वारयन्नाह कर्म्मण्येवेति। ते तव तत्त्वज्ञानार्थिनः कर्म्मण्येवाधिकारस्तत्फलेषु बन्धहेतुषु अधिकारः कामो मास्तु। ननु कर्म्मणि कृते तत्फलं स्यादेव भोजने कृते तृप्तिवदित्याशङ्क्याह मेति। मा कर्म्मफलहेतुर्भूः कर्म्मफलं प्रवृत्तिहेतुर्यस्य स तथाभूतो मा भूः, काम्यमानस्यैव स्वर्गादेर्नियोज्यविशेषणत्वेन फलत्वादकामितं फलं न स्यादिति भावः। अतएव फलं बन्धकं भविष्यतीति तस्मात् भयादकर्म्मणि कर्म्माकरणेऽपि तव सङ्गो निष्ठा मास्तु ॥ ४७ ॥

किं तर्हि योगस्थ इति। योगः परमेश्वरैकपरता, तत्र स्थितः कर्म्माणि कुरु, तथा सङ्गं कर्त्तृत्वाभिनिवेशं त्यक्त्वा केवलमीश्वराश्रयेणैव कुरु, तत्फलस्य ज्ञानस्यापि सिद्ध्यसिद्ध्योः समो भूत्वा केवलमीश्वरार्पणेनैव कुरु, यत एवम्भूतं समत्वमेव योग उच्यते सद्भिश्चित्तसमाधानरूपत्वात् ॥ ४८ ॥

काम्यन्तु कर्म्मातिनिकृष्टमित्याह दूरेणेति। बुद्ध्या व्यवसायात्मिकया कृतः कर्म्मयोगो बुद्धियोगो बुद्धिसाधनभूतो वा, तस्मात्

बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः॥ ४९
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।
तस्माद् योगाय युज्यस्व योगः कर्म्मसु कौशलम्॥ ५०
कर्म्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः।
जन्मबन्धविनिर्म्मुक्ताः पदं गच्छन्त्यनामयम्॥ ५१
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति।

---

सकाशादन्यत् साधनभूतं काम्यं कर्म्म दूरेणावरमत्यन्तमपकृष्टं, हि यस्मादेवं, तस्माद्बुद्धौ ज्ञाने शरणमाश्रयं कर्म्मयोगमन्विच्छ अनुतिष्ठ, यद्वा बुद्धौ शरणं त्रातारमीश्वरमाश्रयेत्यर्थः। फलहेतवस्तु सकामा नराः कृपणा दीनाः, "यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात् प्रैति स कृपणः" इति श्रुतेः॥ ४९॥

बुद्धियोगयुक्तस्तु श्रेष्ठ इत्याह बुद्धियुक्त इति। सुकृतं स्वर्गादि-प्रापकं, दुष्कृतं निरयादिप्रापकं, ते उभे इहैव जन्मनि परमेश्वर-प्रसादेन त्यजति, तस्मात् तदर्थाय कर्म्मयोगाय युज्यस्व घटस्व, यतः कर्म्मसु यत् कौशलं बन्धकानामपि तेषामीश्वराराधनेन मोक्षपरत्व-सम्पादकचातुर्य्यं स एव योगः॥ ५०॥

कर्म्मणां मोक्षसाधनत्वप्रकारमाह कर्म्मजमिति। कर्म्मजं फलं त्यक्त्वा केवलमीश्वराराधनार्थं कर्म्म कुर्व्वाणा मनीषिणो ज्ञानिनो भूत्वा जन्मरूपेण बन्धन विनिर्म्मुक्ताः सन्तोऽनामयं सर्व्वोपद्रव-रहितं विष्णोः पदं मोक्षाख्यं गच्छन्ति॥ ५१॥

कदाहं तत्पदं प्राप्स्यामीत्यपेक्षायामाह यदेति द्वाभ्याम्। मोहो देहादिष्वात्मबुद्धिस्तदेव कलिलं गहनम्। "कलिलं गहनं विदुः" इत्यभिधानकोषस्मृतेः। ततश्चायमर्थः,—एवं परमेश्वराराधने क्रियमाणे यदा तत्प्रसादेन तव बुद्धिर्देहाभिमानलक्षणं

तदा गन्तासि निर्व्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३

अर्ज्जुन उवाच।

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४

श्रीभगवानुवाच।

प्रजहाति यदा कामान् सर्व्वान् पार्थ मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५

---

मोहमयं गहनं दुर्गं विशेषेणातितरिष्यति, तदा श्रोतव्यस्य श्रुतस्य चार्थस्य निर्व्वेदं वैराग्यं गन्तासि प्राप्स्यसि तयोरनुपादेयत्वेन जिज्ञासां न करिष्यसीत्यर्थः ॥ ५२ ॥

ततश्च श्रुतीति। श्रुतिभिर्नानालौकिकवैदिकार्थश्रवणैर्विप्रतिपन्ना इतः पूर्व्वं विक्षिप्ता सती तव बुद्धिर्यदा समाधौ स्थास्यति। समाधीयते चित्तमस्मिन्निति समाधिः परमेश्वरस्तस्मिन् निश्चला विषयान्तरैनाकृष्टा अतएवाचला अभ्यासपाटवेन तत्रैव स्थिरा च सती तदा योगं योगफलं तत्त्वज्ञानमवाप्स्यसि ॥ ५३ ॥

पूर्व्वश्लोकस्यात्मतत्त्वज्ञस्य लक्षणं जिज्ञासुरर्ज्जुन उवाच स्थितप्रज्ञस्य का भाषेति। स्वाभाविके समाधौ स्थितस्य अतएव स्थिता निश्चला प्रज्ञा बुद्धिर्यस्य, तस्य भाषा का? भाष्यते अनयेति भाषा लक्षणमिति यावत्। स केन लक्षणेन स्थितप्रज्ञ उच्यत इत्यर्थः, तथा स्थितधीः किं कथं भाषणमासनं व्रजनञ्च कुर्य्यादित्यर्थः ॥ ५४ ॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते॥ ५६
यः सर्व्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम्।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता॥ ५७
यदा संहरते चायं कूर्म्मोऽङ्गानीव सर्व्वशः।

---

अत्र च यानि साधकस्य ज्ञानसाधनानि, तान्येव स्वाभाविकानि सिद्धस्य लक्षणानि, अतः सिद्धस्य तल्लक्ष्य लक्षणानि कथयन्नेवान्तरङ्गाणि ज्ञानसाधनान्याह यावदध्यायसमाप्ति। तत्र प्रथमप्रश्नस्योत्तरमाह प्रजहातीति द्वाभ्याम्। मनसि स्थितान् कामान् यदा प्रकर्षेण जहाति। त्यागे हेतुमाह आत्मनीति। आत्मन्येव स्वस्मिन्नेव परमानन्दरूपे आत्मना स्वयमेव तुष्ट इत्यात्मारामः सन् यदा क्षुद्रविषयाभिलाषांस्त्यजति, तदा तेन लक्षणेन मुनिः स्थितप्रज्ञ उच्यते॥ ५५॥

किञ्च दुःखेष्विति। दुःखेषु प्राप्तेष्वपि अनुद्विग्नमक्षुभितं मनो यस्य सः, सुखेषु विगता स्पृहा यस्य सः। तत्र हेतुर्वीता अपगता रागभयक्रोधा यस्मात्। तत्र रागः प्रीतिः। स मुनिः स्थितधीरुच्यते॥ ५६॥

कथं भाषेतेत्यस्योत्तरमाह य इति। यः सर्व्वत्र पुत्त्रमित्रादिष्वपि अनभिस्नेहः स्नेहशून्यः, अतएव बाधितानुवृत्त्या तत्तच्छुभमनुकूलं प्राप्य नाभिनन्दति न प्रशंसति, अशुभं प्रतिकूलं प्राप्य न द्वेष्टि न निन्दति, किन्तु केवलमुदासीन एव भाषते, तस्य प्रज्ञा प्रतिष्ठितेत्यर्थः॥ ५७॥

किञ्च यदेति। यदा चायं योगी इन्द्रियार्थेभ्यः शब्दादिभ्यः

इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८

विषया विनिवर्त्तन्ते निराहारस्य देहिनः।
रसवर्ज्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ॥ ५९

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६०

---

सकाशादिन्द्रियाणि संहरते प्रत्याहरति अनायासेन। संहारे दृष्टान्तमाह कूर्म्म इति। अङ्गानि करचरणादीनि कूर्म्मो यथा स्वभावेनैवाकर्षति, तद्वत् ॥ ५८ ॥

ननु नेन्द्रियाणां विषयेभ्यवृत्तिः स्थितप्रज्ञस्य लक्षणं भवितुमर्हति जडानामातुराणामुपवासपराणाञ्च विषयेष्वप्रवृत्तेरविशेषात्, तत्राह विषया इति। इन्द्रियैर्विषयाणामाहरणं ग्रहणमाहारः, निराहारस्य इन्द्रियैर्विषयग्रहणमकुर्व्वतो देहिनो देहाभिमानिनोऽज्ञस्य विषयाः प्रायशो विनिवर्त्तन्ते तदनुभवो निवर्त्तत इत्यर्थः। किन्तु रसो रागोऽभिलाषस्तद्वर्ज्जं अभिलाषस्तु न निवर्त्तत इत्यर्थः। रसोऽपि रागोऽपि परं परमात्मानं दृष्ट्वास्य स्थितप्रज्ञस्य स्वतो निवर्त्तते नश्यतीत्यर्थः। यद्वा निराहारस्य उपवासपरस्य विषयाः प्रायशो निवर्त्तन्ते क्षुधासन्तप्तस्य शब्दस्पर्शाद्यपेक्षाभावात्, किन्तु रसवर्ज्जं रसापेक्षा तु न निवर्त्तत इत्यर्थः। शेषं समानम् ॥ ५९ ॥

इन्द्रियसंयमं विना स्थितप्रज्ञता न सम्भवति, अतः साधकावस्थायां तत्र महान् प्रयत्नः कर्त्तव्य इत्याह यततोऽपीति द्वाभ्याम्। यततो मोक्षार्थं प्रयतमानस्य विपश्चितो विवेकिनोऽपि मन इन्द्रियाणि प्रसभं बलाद्धरन्ति, यतः प्रमाथीनि प्रमथनशीलानि क्षोभकाणीत्यर्थः ॥ ६० ॥

तानि सर्व्वाणि संयम्य युक्त आसीत मत्परः।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥ ६१
ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते।
सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते॥ ६२
क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति॥ ६३
रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति॥ ६४

---

यस्मादेवं, तस्मात् तानीति। युक्तो योगी तानीन्द्रियाणि संयम्य मत्परः सन्नासीत, यस्य वशे वशवर्त्तीनीन्द्रियाणि। एतेन च कथमासीतेति प्रश्नस्य वशीकृतेन्द्रियः सन्नासीतेत्युत्तरं भवति॥ ६१॥

बाह्येन्द्रियसंयमाभावे दोषमुक्ता मनःसंयमाभावे दोषमाह ध्यायत इति द्वाभ्याम्। गुणबुद्ध्या विषयान् ध्यायतः पुंसस्तेषु सङ्ग आसक्तिर्भवति, आसक्त्या च तेष्वधिकः कामो भवति, कामाच्च केनचित् प्रतिहतात् क्रोधो भवति॥ ६२॥

किञ्च क्रोधादिति। क्रोधात् सम्मोहः कार्य्याकार्य्यविवेकाभावः, ततः शास्त्राचार्य्योपदिष्टार्थस्मृतेर्विभ्रमो विचलनं भ्रंशः, ततो बुद्धेश्चेतनाया नाशः वृक्षादिष्विवाभिभवः, ततः प्रणश्यति मृततुल्यो भवति॥ ६३॥

नन्विन्द्रियाणां विषयप्रवणस्वभावानां निरोद्धुमशक्यत्वादयं दोषो दुष्परिहर इति स्थितप्रज्ञत्वं कथं स्यादित्याशङ्क्याह रागद्वेष इति द्वाभ्याम्। रागद्वेषरहितैर्विगतदर्पैरिन्द्रियैर्विषयांश्चरन्नुपसञ्जानोऽपि प्रसादं शान्तिं प्राप्नोति। रागद्वेषराहित्यमेवाह आत्मेति। आत्मनो मनसो वश्यैरिन्द्रियैर्विधेयो वशवर्त्ती आत्मा

प्रसादे सर्व्वदुःखानां हानिरस्योपजायते।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्य्यवतिष्ठते॥ ६५

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्॥ ६६

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि॥ ६७

---

मनो यस्येति, अनेनैव कथं व्रजेतीत्यस्य चतुर्थप्रश्नस्य स्वाधीनैरिन्द्रियैर्विषयान् गच्छतीत्युत्तरमुक्तं भवति॥ ६४॥

प्रसादे सति किं स्यादित्यत आह प्रसाद इति। प्रसादे सति सर्व्वदुःखनाशस्ततश्च प्रसन्नचेतसो बुद्धिः प्रतिष्ठिता भवतीत्यर्थः॥ ६५॥

इन्द्रियनिग्रहस्य स्थितप्रज्ञतासाधनत्वं व्यतिरेकमुखेणोपपादयति नास्तीति। अयुक्तस्यावशीकृतेन्द्रियस्य नास्ति बुद्धिः शास्त्राचार्य्योपदेशाभ्यामात्मविषया बुद्धिः प्रज्ञैव नोत्पद्यते, कुतस्तस्याः प्रतिष्ठावार्त्ता इत्यत आह नचेति। न चायुक्तस्य भावना ध्यानं, भावनया हि बुद्धेरात्मनि प्रतिष्ठा भवति, सा चायुक्तस्य यतो नास्ति। न चाभावयत आत्मध्यानमकुर्व्वतः शान्तिरात्मनि चित्तोपरमः, अशान्तस्य कुतः सुखं मोक्षानन्द इत्यर्थः॥ ६६॥

नास्ति बुद्धिरयुक्तस्येत्यत्र हेतुमाह इन्द्रियाणामिति। इन्द्रियाणामवशीकृतानां स्वैरं विषयेषु चरतां मध्ये यदेवैकमिन्द्रियं मनोऽनुविधीयते अवशीकृतं सदिन्द्रियेण सह गच्छति, तदेवैकमिन्द्रियमस्य मनसः पुरुषस्य वा प्रज्ञां हरति विषयविक्षिप्तां करोति, किमु वक्तव्यं बहूनि प्रज्ञां हरन्तीति, यथा प्रमत्तस्य कर्णधारस्य नावं वायुः समुद्रे सर्व्वतः परिभ्रामयति, तद्वदिति॥ ६७॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्व्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८
या निशा सर्व्वभूतानां तस्यां जागर्त्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९
आपूर्य्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।

---

इन्द्रियसंयमस्य स्थितप्रज्ञत्वे साधनत्वं लक्षणत्वञ्चोक्तमुपसंहरति तस्मादिति । साधनत्वोपसंहारे तस्य प्रज्ञा प्रतिष्ठिता भवतीत्यर्थः, लक्षणत्वोपसंहारे तस्य प्रज्ञा प्रतिष्ठिता ज्ञातव्येत्यर्थः । महाबाहो ! इति सम्बोधयन् वैरिनिग्रहे समर्थस्य तवात्रापि सामर्थ्यं भवेदिति सूचयति ॥ ६८ ॥

ननु न कश्चिदपि प्रसुप्त इव दर्शनादिव्यापारशून्यः सर्व्वात्मना निगृहीतेन्द्रियो लोके दृश्यते, अतोऽसम्भावितमिदं लक्षणमित्याशङ्क्याह या निशेति । सर्व्वेषां भूतानां या निशा निशेव निशा आत्मनिष्ठा अज्ञानध्वान्तावृतमतीनां तस्यां दर्शनादिव्यापाराभावात्, तस्यामात्मनिष्ठायां संयमी निगृहीतेन्द्रियो जागर्त्ति प्रबुध्यते, यस्यान्तु विषयनिष्ठायां भूतानि जाग्रति प्रबुध्यन्ते, सा आत्मतत्त्वं पश्यतो मुनेर्निशा तस्यां दर्शनादिव्यापारस्तस्य नास्तीत्यर्थः । एतदुक्तं भवति, यथा दिवान्धानामुलूकादीनां रात्रावेव दर्शनं, न तु दिवसे, एवं ब्रह्मज्ञस्योन्मीलिताक्षस्यापि ब्रह्मण्येव दर्शनं तु विषयेषु, अतो नासम्भावितमिदं लक्षणमिति ॥ ६९ ॥

ननु विषयेषु दृष्ट्यभावे कथमसौ तान् भुङ्क्ते इत्यपेक्षायामाह आपूर्य्यमाणमिति । नानानदनदीभिरापूर्य्यमाणमप्यचलप्रतिष्ठमनतिक्रान्तमर्य्यादमेव समुद्रं पुनरप्यन्या आपो यथा प्रविशन्ति,

तद्वत् कामा यं प्रविशन्ति सर्व्वे
स शान्तिमाप्नोति न कामकामी ॥ ७०
विहाय कामान् यः सर्व्वान् पुमांश्चरति निःस्पृहः ।
निर्म्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ ७१
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्व्वाणमृच्छति ॥ ७२
इति श्रीमद्भगवद्गीतासूपनिषत्सु सांख्ययोगो
नाम द्वितीयोऽध्यायः ॥ २ ॥

---

तथा कामा विषयाः यं मुनिमन्तर्दृष्टिं भोगरविक्रियमाणमेव प्रारब्धकर्म्मभिराक्षिप्ताः सन्तः प्रविशन्ति, स शान्तिं कैवल्यं प्राप्नोति, न तु कामकामी भोगकामनाशीलः ॥ ७० ॥

यस्मादेवं, तस्मात् विहायेति । प्राप्तान् कामान् विहाय त्यक्त्वा उपेक्ष्य अप्राप्तेषु च निःस्पृहः, यतो निरहङ्कारः, अतएव तद्भोगसाधनेषु निर्म्ममः सन्नन्तर्दृष्टिर्भूत्वा यश्चरति प्रारब्धवशेन भोगान् भुङ्क्ते यत्र कुत्रापि गच्छति वा, स शान्तिं प्राप्नोति ॥ ७१ ॥

उक्तां ज्ञाननिष्ठां स्तुवन्नुपसंहरति एषेति । ब्राह्मी स्थिति-र्ब्रह्मज्ञाने निष्ठा एषा एवंविधा, एनां परमेश्वराराधनेन विशुद्धान्तःकरणः पुमान् प्राप्य न मुह्यति पुनः संसारमोहं न प्राप्नोति । यतोऽन्तकाले मृत्युसमयेऽपि अस्यां क्षणमात्रं स्थित्वा ब्रह्मनिर्व्वाणं ब्रह्मणि लयमृच्छति प्राप्नोति, किं पुनर्वक्तव्यं बाल्यमारभ्य स्थित्वा प्राप्नोतीति ॥ ७२ ॥

शोकपङ्कनिमग्नं यः साङ्ख्ययोगोपदेशतः ।
उज्जहारार्ज्जुनं भक्तं स कृष्णः शरणं मम ॥

इति श्रीधरस्वामिकृतटीकायां द्वितीयोऽध्यायः ॥ २ ॥

---

# तृतीयोऽध्यायः।

अर्ज्जुन उवाच।

ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिर्जनार्द्दन।
तत् किं कर्म्मणि घोरे मां नियोजयसि केशव ॥ १
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २

एवं तावत् "अशोच्यानन्वशोचस्त्वम्" इत्यादिना प्रथमं मोक्ष-साधनत्वेन देहात्मविवेकबुद्धिरुक्ता, तदनन्तरम् "एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु" इत्यादिना कर्म्म चोक्तं, न च तयोर्गुणप्रधानभावः स्पष्टं दर्शितः, तत्र बुद्धियुक्तस्य स्थितप्रज्ञस्य निष्क्रियत्व-नियतेन्द्रियत्व-निरहङ्कारत्वाद्यभिधानात् "एषा ब्राह्मी स्थितिः पार्थ" इति सप्रशंसमुपसंहाराच्च बुद्धिकर्म्मणोर्मध्ये बुद्धेः श्रेष्ठत्वं भगवतोऽभिप्रेतं मन्वानोऽर्ज्जुन उवाच ज्यायसी चेदिति। कर्म्मणः सकाशान्मोक्षेऽन्तरङ्गत्वेन बुद्धिर्ज्यायसी अधिकतरा श्रेष्ठा चेत् तव सम्मता, तर्हि किमर्थं तस्माद् युध्यस्वेति, तस्मादुत्तिष्ठेति च वारं वारं वदन् घोरे हिंसात्मके कर्म्मणि मां प्रवर्त्तयसि ॥ १ ॥

ननु "धर्म्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्त्रियस्य न विद्यते" इत्यादिना कर्म्मणोऽपि श्रेष्ठत्वमुक्तमेवेत्याशङ्क्याह व्यामिश्रेणेति। क्वचित् कर्म्मप्रशंसा क्वचिज्ज्ञानप्रशंसेत्येवं व्यामिश्रं सन्देहोत्पादकमिव यद्वाक्यं, तेन मे मतिमुभयत्र दोलायितां कुर्व्वन् मोहयसीव। परम-कारुणिकस्य तव मोहकत्वं नास्त्येव, तथापि भ्रान्त्या ममैवं भातीति

श्रीभगवानुवाच ।

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।**
**ज्ञानयोगेन सांख्यानां कर्म्मयोगेण योगिनाम् ॥ ३**

---

इवशब्देनोक्तम्, अत उभयोर्मध्ये यद्भद्रं, तदेकं निश्चित्य वदेति। यद्वा अहं इदमेव श्रेयःसाधनमिति निश्चित्य येनानुष्ठितेन श्रेयो मोक्षमाप्नुयां प्राप्स्यामि, तदेवकं निश्चित्य वदेत्यर्थः ॥ २ ॥

अत्रोत्तरं श्रीभगवानुवाच, लोकेऽस्मिन्निति। अयमर्थः,—यदि मया परस्परनिरपेक्षं मोक्षसाधनत्वेन कर्म्मज्ञानयोगरूपं निष्ठाद्वय-मुक्तं स्यात् तर्हि "द्वयोर्मध्ये यद्भद्रं स्यात् तदेकं वद" इति त्वदीयः प्रश्नः सङ्गच्छते, न तु मया तथोक्तं, किन्तु द्वाभ्यामेकैव ब्रह्मनिष्ठोक्ता गुणप्रधानभूतयोस्तयोः स्वातन्त्र्यानुपपत्तेरेकस्या एव तु प्रकार-भेदमात्रमधिकारभेदेनोक्तमिति ; अस्मिन् शुद्धाशुद्धान्तःकरणतया द्विविधे लोकेऽधिकारिजने द्वे विधे प्रकारौ यस्याः सा द्विविधा निष्ठा मोक्षपरता पुरा पूर्व्वाध्याये मया सर्व्वज्ञेन प्रोक्ता स्पष्टमेवोक्ता। प्रकारद्वयमेव निर्द्दिशति,—साङ्ख्यानां शुद्धान्तः-करणानां ज्ञानभूमिकामारूढ़ानां ज्ञानपरिपाकार्थं ज्ञानयोगेन ध्यानादिना निष्ठा ब्रह्मपरतोक्ता "तानि सर्व्वाणि संयम्य युक्त आसीत मत्परः" इत्यादिना। साङ्ख्यभूमिकामनारूढ़ानान्तु अन्तः-करणशुद्धिद्वारा तदारोहाय तदुपायभूतकर्म्मयोगाधिकारिणां योगिनां कर्म्मयोगेण निष्ठोक्ता "धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रि-यस्य न विद्यते" इत्यादिना। अतएव तव चित्तशुद्ध्यशुद्धिरूपावस्था-भेदेन द्विविधापि निष्ठोक्ता "एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु" इति ॥ ३ ॥

न कर्म्मणामनारम्भान्नैष्कर्म्म्यं पुरुषोऽश्नुते ।
न च सन्न्यसनादेव सिद्धिं समधिगच्छति ॥ ४
न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत् ।
कार्य्यते ह्यवशः कर्म्म सर्व्वः प्रकृतिजैर्गुणैः ॥ ५
कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढ़ात्मा मिथ्याचारः स उच्यते ॥ ६

---

अतः सम्यक् चित्तशुद्ध्यर्थं ज्ञानोत्पत्तिपर्य्यन्तं वर्णाश्रमोचितानि कर्म्माणि कर्त्तव्यानि, अन्यथा चित्तशुद्ध्यभावेन ज्ञानानुत्पत्तेरित्याह न कर्म्मणामिति। कर्म्मणाम् अनारम्भात् अननुष्ठानान्नैष्कर्म्म्यं ज्ञानं नाश्नुते न प्राप्नोति। ननु च "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इति श्रुत्या सन्न्यासस्य मोक्षाङ्गत्वश्रुतेः सन्न्यासादेव मोक्षो भविष्यति किं कर्म्मभिरित्याशङ्क्योक्तं न चेति। न चित्तशुद्धिं विना कृतात् सन्न्यसनादेव ज्ञानशून्यात् सिद्धिं मोक्षं समधिगच्छति प्राप्नोति ॥ ४ ॥

कर्म्मणाञ्च सन्न्यासस्तेष्वनासक्तिमात्रं, न तु स्वरूपेणाशक्यत्वादित्याह न हि कश्चिदिति। जातु कस्याञ्चिदप्यवस्थायां क्षणमात्रमपि कश्चिदपि ज्ञानी अज्ञानी वा अकर्म्मकृत् कर्म्माण्यकुर्व्वाणो न तिष्ठति। अत्र हेतुः प्रकृतिजैः स्वभावप्रभवै रागद्वेषादिभिर्गुणैः सर्व्वोऽपि जनः कर्म्म कार्य्यते कर्म्मणि प्रवर्त्त्यते अवशोऽस्वतन्त्रः सन् ॥ ५ ॥

अतोऽज्ञं कर्म्मत्यागिनं निन्दति कर्म्मेन्द्रियाणीति। वाक्पाण्यादीनि कर्म्मेन्द्रियाणि संयम्य निगृह्य यो मनसा भगवद्ध्यानच्छलेन इन्द्रियार्थान् विषयान् स्मरन्नास्तेऽविशुद्धतया मनसा आत्मनिस्थैर्य्याभावात्, स मिथ्याचारः कपटाचारो दाम्भिक उच्यत इत्यर्थः ॥६॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्ज्जुन ।
कर्म्मेन्द्रियैः कर्म्मयोगमसक्तः स विशिष्यते ॥ ७
नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्म्मणः ॥ ८
यज्ञार्थात् कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः ।
तदर्थं कर्म्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।

---

एतद्विपरीतः कर्म्मकर्त्ता तु श्रेष्ठ इत्याह यस्त्विन्द्रियाणीति । यस्तु ज्ञानेन्द्रियाणि मनसा नियम्य ईश्वरपराणि कृत्वा कर्म्मेन्द्रियैः कर्म्मरूपं योगमुपायमारभते अनुतिष्ठति, असक्तः फलाभिलाषरहितः, स विशिष्यते विशिष्टो भवति चित्तशुद्ध्या ज्ञानवान् भवतीत्यर्थः ॥ ७ ॥

नियतमिति । यस्मादेवं तस्मान्नियतं नित्यं कर्म्म सन्ध्योपासनादि कुरु, हि यस्मादकर्म्मणः सर्व्वकर्म्मणोऽकरणात् सकाशात् कर्म्मकरणं ज्यायोऽधिकतरम् । अन्यथा अकर्म्मणः सर्व्वकर्म्मशून्यस्य तव शरीरनिर्व्वाहोऽपि न भवेत् ॥ ८ ॥

साङ्ख्यास्तु सर्व्वमपि कर्म्म बन्धकत्वान्न कार्य्यमित्याहुस्तन्निराकुर्व्वन्नाह यज्ञार्थादिति । "यज्ञो वै विष्णुः" इति श्रुतेः, तदाराधनार्थात् कर्म्मणोऽन्यत्र तदेकं विना लोकोऽयं कर्म्मबन्धनः कर्म्मभिर्बध्यते, न त्वीश्वराराधनार्थेन कर्म्मणा, अतस्तदर्थं विष्णुप्रीत्यर्थं मुक्तसङ्गो निष्कामः सन् कर्म्म सम्यगाचर ॥ ९ ॥

प्रजापतिवचनादपि कर्म्मकर्त्तैव श्रेष्ठ इत्याह सहयज्ञा इति चतुर्भिः । यज्ञेन सह वर्त्तन्त इति सहयज्ञा यज्ञाधिकृता ब्राह्मणाद्याः प्रजाः पुरा सर्गादौ सृष्ट्वेदमुवाच ब्रह्मा, अनेन यज्ञेन

अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १०
देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्व्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३

---

प्रसविष्यध्वं, प्रसवो वृद्धिः उत्तरोत्तरामतिवृद्धिं लभध्वमित्यर्थः, तत्र हेतुः एष यज्ञो वो युष्माकमिष्टकामधुक् इष्टान् कामान् दोग्धीति तथा अभीष्टभोगप्रदोऽस्त्वित्यर्थः। अत्र च यज्ञग्रहणमावश्यककर्म्मोपलक्षणार्थम्। काम्यकर्म्मप्रशंसा तु प्रकरणेऽसङ्गतापि सामान्यतोऽकर्म्मणः कर्म्म श्रेष्ठमित्येतदर्थमित्यदोषः ॥ १० ॥

कथमिष्टकामदोग्धा यज्ञो भवेदित्यत आह देवानिति। अनेन यज्ञेन यूयं देवान् भावयत हविर्भागैः संवर्द्धयत, ते च देवा वो युष्मान् संवर्द्धयन्तु वृष्ट्यादिना अन्नोत्पत्तिद्वारेण, एवमन्योऽन्यं संवर्द्धयन्तो देवाश्च यूयञ्च परस्परं श्रेयोऽभीष्टमर्थं प्राप्स्यथ ॥ ११ ॥

एतदेव स्पष्टीकुर्व्वन् कर्म्माकरणे दोषमाह इष्टानिति। यज्ञैर्भाविताः देवा वृष्ट्यादिद्वारेण वो युष्मभ्यं भोगान् दास्यन्ते, हि अतो देवैर्दत्तानन्नादीनेभ्यो देवेभ्यः पञ्चयज्ञादिभिरदत्त्वा यो भुङ्क्ते, स तु चौर एव ज्ञेयः ॥ १२ ॥

इतश्च यजन्त एव श्रेष्ठाः, नेतर इत्याह यज्ञशिष्टाशिन इति। वैश्वदेवादियज्ञावशिष्टं येऽश्नन्ति, ते पञ्चसूनादिकृतैः सर्व्वैः किल्बिषैर्मुच्यन्ते। पञ्चसूनाश्च स्मृतावुक्ताः,—"कण्डनी पेषणी चुल्ली उदकुम्भी

अन्नाद्भवन्ति भूतानि पर्ज्जन्यादन्नसम्भवः।
यज्ञाद्भवति पर्ज्जन्यो यज्ञः कर्म्मसमुद्भवः॥ १४
कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।
तस्मात् सर्व्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥ १५

---

च मार्ज्जनी। पञ्चसूना गृहस्थस्य ताभिः स्वर्गं न गच्छति"। ये त्वात्मनो भोजनार्थमेव पचन्ति न तु वैश्वदेवाद्यर्थं, ते पापा दुराचारा अघमेव भुञ्जते॥ १३॥

जगच्चक्रप्रवृत्तिहेतुत्वादपि कर्म्म कर्त्तव्यमित्याह अन्नादिति त्रिभिः। अन्नाच्छुक्रशोणितरूपेण परिणताद्भूतान्युत्पद्यन्ते, अन्नस्य च सम्भवः पर्ज्जन्याद्वृष्टेः, स च पर्ज्जन्यो यज्ञाद्भवति, स च यज्ञः कर्म्मसमुद्भवः कर्म्मणा यजमानादिव्यापारेण सम्यक् संपद्यत इत्यर्थः। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः॥ १४॥

तथा कर्म्मेति। तच्च यजमानादिव्यापाररूपं कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्म वेदस्तस्मात् प्रवृत्तं जानीहि, तच्च वेदाख्यं ब्रह्म अक्षरात् परब्रह्मणः समुद्भूतं जानीहि, "अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्व्वेदः सामवेदः" इति श्रुतेः। यत एवमक्षरादेव यज्ञप्रवृत्तेरत्यन्तमभिप्रेतो यज्ञस्तस्मात् सर्व्वगतमप्यक्षरं ब्रह्म नित्यं सर्व्वदा यज्ञे प्रतिष्ठितं यज्ञेनोपायभूतेन प्राप्यत इति यज्ञे प्रतिष्ठितमुच्यत इति। "उद्यमस्था सदा लक्ष्मीः" इतिवत्। यद्वा यस्मात् जगच्चक्रस्य मूलं कर्म्म, तस्मात् सर्व्वगतं मन्त्रार्थवादैः सर्व्वेषु भूतार्थाख्यानादिषु गतं स्थितमपि वेदाख्यं ब्रह्म सर्व्वदा यज्ञे तात्पर्य्येण प्रतिष्ठितम्, अतो यज्ञादि कर्म्म कर्त्तव्यमित्यर्थः॥ १५॥

एवं प्रवर्त्तितं चक्रं नानुवर्त्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते ॥ १७
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
न चास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८

---

यस्मादेवं परमेश्वरेणैव भूतानां पुरुषार्थसिद्धये कर्म्मादिचक्रं प्रवर्त्तितं, तस्मात् तदकुर्व्वतो वृथैव जीवितमित्याह एवमिति। परमेश्वरवाक्यभूताद्वेदाख्यब्रह्मणः पुरुषाणां कर्म्मणि प्रवृत्तिस्ततः कर्म्मनिष्पत्तिस्ततः पर्ज्जन्यस्ततोऽन्नं ततो भूतानि, भूतानां पुनस्तथैव कर्म्मप्रवृत्तिरित्येवं प्रवर्त्तितं चक्रं यो नानुवर्त्तयति नानुतिष्ठति, अघं पापरूपमायुर्यस्य सः, यत इन्द्रियैर्विषयेष्वेवारमति न त्वीश्वराराधनार्थं कर्म्मणि, अतो मोघं व्यर्थं स जीवति ॥ १६ ॥

तदेवं "न कर्म्मणामनारम्भात्" इत्यादिना अज्ञस्यान्तःकरणशुद्ध्यर्थं कर्म्मयोगमुक्त्वा ज्ञानिनः कर्म्मानुपयोगमाह यस्त्विति द्वाभ्याम्। आत्मन्येव रतिः प्रीतिर्यस्य सः, ततश्चात्मन्येव तृप्तः स्वानन्दानुभवेन निर्व्वृतः, अतएवात्मन्येव सन्तुष्टो भोगापेक्षारहितो यस्तस्य कर्त्तव्यं कर्म्म नास्तीति ॥ १७ ॥

तत्र हेतुमाह नैवेति। कृतेन कर्म्मणा तस्यार्थः पुण्यं नैवास्ति, न चाकृतेन कश्चन कोऽपि प्रत्यवायोऽस्ति निरहङ्कारत्वेन विधिनिषेधातीतत्वात्। तथापि "तस्मादेषां न प्रियं यदेतन्मनुष्या विदुः" इति श्रुतेर्मोक्षे देवकृतविघ्नसम्भवात् तत्परिहारार्थं कर्म्मभिर्देवाः सेव्या इत्याशङ्क्योक्तं सर्व्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिदप्यर्थव्यपाश्रयः आश्रय एव व्यपाश्रयः अर्थं मोक्षे आश्रयणीयोऽस्य

तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर।
असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः॥ १९
कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसि॥ २०

---

नात्मीयर्थः विघ्नाभावस्य श्रुत्यैवोक्तत्वात्। तथाच श्रुतिः,—"तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां सम्भवति" इति, हनेत्यव्ययमप्यर्थे, देवा अपि तस्यात्मतत्त्वज्ञस्य अभूत्यै ब्रह्मभावप्रतिबन्धाय नेशते न प्रभवन्तीति श्रुतेरर्थः। देवकृतास्तु विघ्नाः सम्यग्ज्ञानोत्पत्तेः प्रागेव "यदेतद्ब्रह्म मनुष्या विदुस्तदेषां देवानां न प्रियम्" इति श्रुत्या ब्रह्मज्ञानस्यैवाप्रियत्वोक्त्या तत्रैव विघ्नकर्त्तृत्वस्य सूचितत्वात्॥ १८॥

यस्मादेवम्भूतस्य ज्ञानिन एव कर्म्मानुपयोगो नान्यस्य, तस्मात् त्वं कर्म्म कुर्व्वित्याह तस्मादिति। असक्तः फलसङ्गरहितः सन् कार्य्यमवश्यकर्त्तव्यतया विहितं नित्यनैमित्तिकं कर्म्म सम्यगाचर, हि यस्मादसक्तः कर्म्माचरन् पूरुषः परं मोक्षं चित्तशुद्धिद्वारा प्राप्नोति॥ १९॥

अत्र सदाचारं प्रमाणयति कर्म्मणैवेति। कर्म्मणैव शुद्धसत्त्वाः सन्तः संसिद्धिं सम्यग्ज्ञानं प्राप्ता इत्यर्थः, यद्यपि त्वं सम्यग्ज्ञानिनमेवात्मानं मन्यसे तथापि कर्म्माचरणं भद्रमेवेत्याह लोकसंग्रहमित्यादि। लोकस्य संग्रहः स्वधर्म्मे प्रवर्त्तनं "मया कर्म्मणि कृते जनः सर्व्वोऽपि करिष्यति, अन्यथा ज्ञानिदृष्टान्तेनाज्ञो निजधर्म्मं नित्यं कर्म्म त्यजन् पतेत्" इत्येवं लोकरक्षणमपि तावत् प्रयोजनं पश्यन् कर्म्म कर्त्तुमेवार्हसि न त्यक्तुमित्यर्थः॥ २०॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥ २१
न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि ॥ २२
यदि ह्यहं न वर्त्तेयं जातु कर्म्मण्यतन्द्रितः।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्व्वशः ॥ २३
उत्सीदेयुरिमे लोका न कुर्य्यां कर्म्म चेदहम्।
सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४
सक्ताः कर्म्मण्यविद्वांसो यथा कुर्व्वन्ति भारत।
कुर्य्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५

---

कर्म्मकरणे लोकसंग्रहो यथा स्यात् तदाह यद्यदिति। इतरः प्राकृतोऽपि जनस्तत्तदेवाचरति, स श्रेष्ठो जनः कर्म्मशास्त्रं तन्निवृत्तिशास्त्रं वा यत् प्रमाणं मन्यते तदेव लोकोऽप्यनुसरति ॥ २१ ॥

अत्र चाहमेव दृष्टान्त इत्याह न मे इति त्रिभिः। हे पार्थ! मे कर्त्तव्यं नास्ति, यतस्त्रिष्वपि लोकेष्वनवाप्तमप्राप्तं अवाप्तव्यं प्राप्यं नास्ति, तथापि कर्म्मणि वर्त्त एव कर्म्म करोम्येवेत्यर्थः ॥ २२ ॥

अकरणे लोकस्य नाशं दर्शयति यदि ह्यहमिति। जातु कदाचिदतन्द्रितोऽनलसः सन् यदि कर्म्मणि न वर्त्तेयं कर्म्म नानुतिष्ठेयं तर्हि ममैव वर्त्म मार्गं मनुष्या अनुवर्त्तन्तेऽनुवर्त्तेरन्नित्यर्थः ॥ २३ ॥

ततः किमत आह उत्सीदेयुरिति। उत्सीदेयुः धर्म्मलोपेन नश्येयुः, ततश्च यो वर्णसङ्करो भवेत् तस्याप्यहमेव कर्त्ता स्यां भवेयम्, एवमहमेव प्रजा उपहन्यां मलिनीकुर्य्यामिति ॥ २४ ॥

तस्मादात्मविदापि लोकसंग्रहार्थं तत्कृपया कर्म्म कार्य्यमेवेत्युपसंहरति सक्ता इति। कर्म्मणि सक्ताः अभिनिविष्टाः सन्तो

न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम् ।
योजयेत् सर्व्वकर्म्माणि विद्वान् युक्तः समाचरन् ॥ २६

प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः ।
अहङ्कारविमूढ़ात्मा कर्त्ताहमिति मन्यते ॥ २७

तत्त्ववित् तु महाबाहो गुणकर्म्मविभागयोः ।
गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ॥ २८

---

यथाज्ञाः कर्म्माणि कुर्व्वन्ति, असक्तः सन् विद्वानपि तथैव कुर्य्या-ल्लोकसंग्रहं कर्त्तुमिच्छुः ॥ २५ ॥

ननु कृपया तत्त्वज्ञानमेवोपदेष्टुं युक्तं नेत्याह न बुद्धिभेदमिति । अज्ञानामतएव कर्म्मसङ्गिनां कर्म्मासक्तानामकर्त्रात्मोपदेशेन बुद्धि-भेदमन्यथात्वं न जनयेत् कर्म्मणः सकाशाद्बुद्धिविचालनं न कुर्य्यात् । अपितु योजयेत् सेवयेत् अज्ञान् कर्म्माणि कारयेदित्यर्थः, कथं युक्तोऽवहितो भूत्वा स्वयमाचरन् सन् । बुद्धिविचालने कृते सति कर्म्मसु अश्रद्धानिवृत्तेर्ज्ञानस्य चानुत्पत्तेस्तेषामुभयभ्रंशः स्यादिति भावः ॥२६॥

ननु विदुषापि चेत् कर्म्म कर्त्तव्यं तर्हि विद्वदविदुषोः को विशेष इत्याशङ्क्योभयोर्विशेषं दर्शयति प्रकृतेरिति द्वाभ्याम् । प्रकृतेर्गुणैः प्रकृतिकार्य्यैरिन्द्रियैः सर्व्वप्रकारेण क्रियमाणानि कर्म्माणि तान्यहमेव कर्त्ता करोमीति मन्यते । अत्र हेतुः अहमिति । अहङ्कारेणे-न्द्रियादिष्वात्माध्यासेन विमूढ़बुद्धिः सन् ॥ २७ ॥

विद्वांस्तु तथा न मन्यत इत्याह तत्त्वविदिति । नाहं गुणात्मक इति गुणेभ्य आत्मनो विभागः, न मे कर्म्माणीति कर्म्मभ्योऽप्यात्मनो विभागः, तयोर्गुणकर्म्मविभागयोर्यस्तत्त्वं वेत्ति, स तु न सज्जते कर्त्तृत्वाभिनिवेशं न करोति । तत्र हेतुः गुणा इति । गुणा इन्द्रियाणि गुणेषु विषयेषु वर्त्तन्ते नाहमिति मत्वा ॥ २८ ॥

प्रकृतेर्गुणसंमूढ़ाः सज्जन्ते गुणकर्मसु।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्॥ २९

मयि सर्व्वाणि कर्म्माणि सन्न्यस्याध्यात्मचेतसा।
निराशीर्निर्म्ममो भूत्वा युध्यस्व विगतज्वरः॥ ३०

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः॥ ३१

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।
सर्व्वज्ञानविमूढ़ांस्तान् विद्धि नष्टानचेतसः॥ ३२

---

न बुद्धिभेदमित्युपसंहरति प्रकृतेरिति। ये: प्रकृतेर्गुणैः सत्त्वादिभिः संमूढ़ाः सन्तो गुणेषु इन्द्रियेषु तत्कर्म्मसु च सज्जन्ते, तानकृत्स्नविदो मन्दमतीन् कृत्स्नवित् सर्व्वज्ञो न विचालयेत्॥ २९॥

तदेवं तत्त्वविदापि कर्म्म कर्त्तव्यं, त्वन्तु नाद्यापि तत्त्वविदतः कर्म्मैव कुर्व्वित्याह मयीति। सर्व्वाणि कर्म्माणि मयि सन्न्यस्य समर्प्याध्यात्मचेतसान्तर्याम्यहं कर्म्म करोमीति दृष्ट्या निराशीर्निष्कामोऽतएव मत्फलसाधनं मदर्थमिदं कर्म्मत्येवं ममताशून्यश्च भूत्वा विगतज्वरस्त्यक्तशोकश्च भूत्वा युध्यस्व॥ ३०॥

एवं कर्म्मानुष्ठाने गुणमाह ये मे इति। मद्वाक्ये श्रद्धावन्तोऽनसूयन्तो दुःखात्मके कर्म्मणि प्रवर्त्तयतीति दोषदृष्टिमकुर्व्वन्तश्च ये मदीयमिदं मतमनुतिष्ठन्ति तेऽपि शनैः कर्म्म कुर्व्वाणाः सम्यग्ज्ञानिवत् कर्म्मभिर्मुच्यन्ते॥ ३१॥

विपक्षे दोषमाह ये त्वेतदिति। ये तु नानुतिष्ठन्ति तानचेतसो विवेकशून्यान् अतएव सर्व्वस्मिन् कर्म्मणि ब्रह्मविषये च यज्ज्ञानं तत्र विमूढ़ान् नष्टान् विद्धि॥ ३२।

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३**
**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥ ३४**

---

ननु तर्हि महाफलत्वादिन्द्रियाणि निगृह्य निष्कामाः सन्तः सर्व्वेऽपि स्वधर्म्ममेव किं नानुतिष्ठन्ति, तत्राह सदृशमिति । प्रकृतिः प्राचीनकर्म्मसंस्काराधीनस्वभावः स्वस्याः स्वकीयायाः प्रकृतेः स्वभावस्य सदृशमनुरूपमेव गुणदोषज्ञानवानपि चेष्टते किं पुनर्वक्तव्यमज्ञश्चेष्टत इति, यस्माद्भूतानि सर्व्वेऽपि प्राणिनः प्रकृतिं यान्ति अनुवर्त्तन्ते एवञ्च सतीन्द्रियनिग्रहः किं करिष्यति प्रकृतेर्बलीयस्त्वादित्यर्थः ॥ ३३ ॥

नन्वेवं प्रकृत्यधीनैव चेत् पुरुषस्य प्रवृत्तिस्तर्हि विधिनिषेधशास्त्रस्य वैयर्थ्यं प्राप्तमित्याशङ्क्याह इन्द्रियस्येति इन्द्रियस्येन्द्रियस्येति वीप्सया सर्व्वेषामिन्द्रियाणां प्रत्येकमित्युक्तम्, अर्थे स्वस्वविषये अनुकूले रागः, प्रतिकूले द्वेष इत्येवं रागद्वेषौ व्यवस्थितौ अवश्यम्भाविनौ, ततश्च तदनुरूपा प्रवृत्तिरिति भूतानां प्रकृतिः, तथापि तयोर्वशवर्त्ती न भवेदिति शास्त्रेण नियम्यते, हि यस्मादस्य मुमुक्षोस्तौ परिपन्थिनौ प्रतिपक्षौ । अयं भावः,—विषयस्मरणादिना रागद्वेषावुत्पाद्यानर्थहितं पुरुषमनर्थेऽतिगम्भीरे स्रोतसीव प्रकृतिर्बलात् प्रवर्त्तयति, शास्त्रन्तु ततः प्रागेव विषयेषु रागद्वेषप्रतिबन्धके परमेश्वरभजनादौ तं प्रवर्त्तयति, ततश्च गम्भीरस्रोतःपातात् पूर्व्वमेव नावमाश्रित इव नानर्थं प्राप्नोति, तदेवं स्वाभाविकीं पश्वादिसदृशीं प्रवृत्तिं त्यक्त्वा धर्म्मे प्रवर्त्तितव्यमित्युक्तम् ॥ ३४ ॥

श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः॥ ३५

अर्ज्जुन उवाच।

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥ ३६

श्रीभगवानुवाच।

काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥ ३७

---

तर्हि स्वधर्म्मस्य युद्धादेर्दुःखरूपस्य यथावत् कर्त्तुमशक्यत्वात् परधर्म्मस्य चाहिंसादेः सुकरत्वाद्धर्म्मत्वाविशेषाच्च तत्र प्रवर्त्तितु-मिच्छन्तं प्रत्याह श्रेयानिति। किञ्चिदङ्गहीनोऽपि स्वधर्म्मः श्रेयान् प्रशस्यतरः स्वनुष्ठितात् सकलाङ्गसम्पूर्त्त्या कृतादपि परधर्म्मात् सकाशात्। तत्र हेतुः स्वधर्म्मे युद्धादौ प्रवर्त्तमानस्य निधनं मरणमपि श्रेष्ठं स्वर्गादिप्रापकत्वात्, परधर्म्मस्तु परस्य भयावहो विषिद्धत्वेन नरकप्रापकत्वात्॥ ३५॥

तयोर्न वशमागच्छेदित्युक्तं, तदेतदशक्यं मन्वानोऽर्ज्जुन उवाच अथेति। वृष्णिवंशेऽवतीर्णो वार्ष्णेयः। हे वार्ष्णेय! अनर्थरूपं पापं कर्त्तुमनिच्छन्नपि केन प्रयुक्तः प्रेरितोऽयं पूरुषः पापं चरति। काम-क्रोधौ विवेकबलेन निरुन्धतोऽपि पुरुषस्य पुनः पापे प्रवृत्तिदर्शनात् अन्योऽपि तयोर्मूलभूतः कश्चित् प्रवर्त्तको भवेदिति सम्भाव-नया प्रश्नः॥ ३६॥

अत्रोत्तरं श्रीभगवानुवाच, काम एष क्रोध एष इत्यादि। यस्त्वया पृष्टो हेतुरेष काम एव। ननु क्रोधोऽपि पूर्व्वं त्वयोक्त इन्द्रियस्येन्द्रियस्यार्थे इत्यत्र, सत्यं, नासौ ततः पृथक्, किन्तु

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च।
यथोल्वेनावृतो गर्भस्तथा तेनेदमावृतम्॥ ३८
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च॥ ३९

---

क्रोधोऽप्येष काम एव हि केनचित् प्रतिहतः क्रोधात्मना परिणमते, पूर्वं पृथक्त्वेनोक्तोऽपि क्रोधः कामज एवेत्यभिप्रायेणैकीकृत्योच्यते, रजोगुणात् समुद्भवतीति तथा, अनेन सत्त्ववृद्ध्या रजसि क्षयं नीते सति कामो न जायत इति सूचितम्, एनं काममिह मोक्ष-मार्गे वैरिणं विद्धि, अयञ्च वक्ष्यमाणक्रमेण हन्तव्य एव यतो नासौ दानेन सन्धातुं शक्य इत्याह महाशनो महदशनं यस्य दुष्पूर इत्यर्थः, न च साम्ना सन्धातुं शक्यो यतो महापाप्मा अत्युग्रः॥ ३७॥

कामस्य वैरित्वं दर्शयति धूमेनेति। धूमेन सहजेन यथा वह्निराव्रियत आच्छाद्यते, यथा चादर्शो मलेन आगन्तुकेन, यथा चोल्वेन गर्भवेष्टनचर्म्मणा गर्भः सर्व्वतो निरुद्ध आवृतस्तथा प्रकार-त्रयेणापि तेन कामेनावृतमिदम्॥ ३८॥

इदं शब्दनिर्द्दिष्टं दर्शयन् वैरित्वं स्फुटयति आवृतमिति। इदं विवेकज्ञानम् एतेनावृतम्। अज्ञस्य खलु भोगसमये कामः सुख-हेतुरेव परिणामे तु वैरित्वं प्रतिपद्यते, ज्ञानिनः पुनस्तत्कालमप्य-नर्थानुसन्धानाद्दुःखहेतुरेवेति नित्यवैरिणेत्युक्तम्। किञ्च विषयैः पूर्य्यमाणोऽपि यो दुष्पूरः आपूर्य्यमाणस्तु शोकसन्तापहेतुत्वादनल-तुल्यः अनेन सर्व्वान् प्रति वैरित्वमुक्तम्॥ ३९॥

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४०
तस्मात् त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१
इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेर्यः परतस्तु सः ॥ ४२

---

इदानीं तस्याधिष्ठानं कथयन् जयोपायमाह इन्द्रियाणीति द्वाभ्याम्। विषयदर्शनश्रवणादिभिः सङ्कल्पेनाध्यवसायेन च कामस्याविर्भावादिन्द्रियाणि च मनश्च बुद्धिश्चास्याधिष्ठानमुच्यते, एतैरिन्द्रियादिभिर्दर्शनादिव्यापारवद्भिराश्रयभूतैर्विवेकज्ञानमावृत्य देहिनं विमोहयति ॥ ४० ॥

यस्मादेवं तस्मादिति। तस्मादादौ विमोहात् पूर्व्वमेवेन्द्रियाणि मनो बुद्धिञ्च नियम्य पाप्मानं पापरूपमेनं कामं हि स्फुटं प्रजहि घातय, यद्वा प्रजहि परित्यज, ज्ञानमात्मविषयं, विज्ञानं शास्त्रीयं तयोर्नाशनं, यद्वा ज्ञानं शास्त्राचार्य्योपदेशजं, विज्ञानं निदिध्यासनजं "तमेव धीरो विज्ञाय प्रज्ञां कुर्व्वीत" इति श्रुतेः ॥ ४१ ॥

यत्र चित्तप्रणिधानेनेन्द्रियाणि नियन्तुं शक्यन्ते, तदात्मस्वरूपं देहादिभ्यो विविच्य दर्शयति इन्द्रियाणीति। इन्द्रियाणि देहादिभ्यो ग्राह्येभ्यः पराणि श्रेष्ठान्याहुः सूक्ष्मत्वात् प्रकाशकत्वाच्च, अतएव तद्व्यतिरिक्तत्वमप्यर्थादुक्तं भवति, इन्द्रियेभ्यश्च सङ्कल्पात्मकं मनः परं तत्प्रवर्त्तकत्वात्, मनसस्तु निश्चयात्मिका बुद्धिः परा निश्चयपूर्व्वकत्वात् सङ्कल्पस्य, यस्तु बुद्धेः परतस्तत्साक्षित्वेनावस्थितः सर्व्वान्तरः स आत्मा तं विमोहयति देहिनमिति देहिशब्दोक्त आत्मा सइति परामृश्यते ॥ ४२ ॥

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३

इति श्रीमद्भगवद्गीतासूपनिषत्सु कर्म्मयोगो
नाम तृतीयोऽध्यायः ॥ ३ ॥

---

उपसंहरति एवमिति । बुद्धेरेव विषयेन्द्रियादिजन्याः कामादि-विक्रियाः, आत्मा तु निर्व्विकारस्तस्मात्तीत्येवं बुद्धेः परमात्मानं बुद्ध्वा आत्मना एवम्भूतया निश्चयात्मिकया बुद्ध्या आत्मानं मनः संस्तभ्य निश्चलं कृत्वा कामरूपिणं शत्रुं जहि मारय। दुरासदं दुःखेनासादनीयं दुर्व्विज्ञेयमित्यर्थः ॥ ४३ ॥

स्वधर्म्मेण यमाराध्य भक्त्या मुक्तिमिता बुधाः ।
तं कृष्णं परमानन्दं तोषयेत् सर्व्वकर्म्मभिः ॥

इति श्रीधरस्वामिकृतायां टीकायां तृतीयो-
ऽध्यायः समाप्तः ॥ ३ ॥

# चतुर्थोऽध्यायः।

श्रीभगवानुवाच।

इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥ १

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।
स कालेनेह महता योगो नष्टः परन्तप॥ २

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम्॥ ३

---

आविर्भावतिरोभावावाविष्कर्त्तुं स्वयं हरिः।
तत्त्वं पदविवेकार्थं कर्म्मयोगं प्रशंसति॥

एवं तावदध्यायद्वयेन कर्म्मयोगोपायकज्ञानयोगो मोक्षसाधनत्वेनोक्तस्तमेव ब्रह्मार्पणादिगुणविधानेन तत्त्वं पदार्थविवेकादिना च प्रपञ्चयिष्यन् प्रथमं तावत् परम्पराप्राप्तत्वेन स्तुवन् श्रीभगवानुवाच इममिति त्रिभिः। अव्ययफलत्वादव्ययम् इमं योगं पुराहं विवस्वते आदित्याय कथितवान्, स च स्वपुत्राय मनवे श्राद्धदेवाय प्राह, स च मनुः स्वपुत्राय इक्ष्वाकवेऽब्रवीत्॥ १॥

एवमिति। एवं राजानश्च ते ऋषयश्चेति अन्येऽपि राजर्षयो निमिप्रमुखाः स्वपित्रादिभिरिक्ष्वाकुप्रमुखैः प्रोक्तमिमं योगं विदुर्जानन्ति स्म। अद्यतनानामज्ञाने कारणमाह हे परन्तप शत्रुतापन स योगः कालवशादिह लोके नष्टो विच्छिन्नः॥ २॥

स एवायमिति। स एवायं योगो विच्छिन्ने सम्प्रदाये सति पुनश्च मया ते तुभ्यमुक्तो यतस्त्वं मम भक्तोऽसि सखा च, अन्यस्मै मया नोच्यते, हि यस्मादेतदुत्तमं रहस्यम्॥ ३॥

अर्ज्जुन उवाच ।

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४

श्रीभगवानुवाच ।

बहूनि मे व्यतीतानि जन्मानि तव चार्ज्जुन ।
तान्यहं वेद सर्व्वाणि न त्वं वेत्थ परन्तप ॥ ५

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६

---

भगवतो विवस्वन्तं प्रति योगोपदेशासम्भवं पश्यन्नर्ज्जुन उवाच अपरमिति । अपरम् अर्व्वाचीनं तव जन्म, परं प्राक्कालीनं विवस्वतो जन्म, तस्मात् तवाधुनातनत्वाच्चिरन्तनाय विवस्वते त्वमादौ योगं प्रोक्तवानिति तत् कथमहं जानीयां ज्ञातुं शक्नुयाम् ॥ ४ ॥

रूपान्तरेणोपदिष्टवानित्यभिप्रायेणोत्तरं श्रीभगवानुवाच बहूनीति । तान्यहं वेद वेद्मि अलुप्तविद्याशक्तित्वात्, त्वन्तु न वेत्थ वेत्सि अविद्यावृतत्वात् ॥ ५ ॥

ननु अनादेस्तव कुतो जन्म अविनाशिनश्च कथं पुनःपुनर्ज्जन्म, येन बहूनि मे व्यतीतानीत्युच्यते, ईश्वरस्य तव पुण्यपापविहीनस्य कथं वा जीववज्जन्मेत्यत आह अजोऽपीति । सत्यमेवं. तथापि जन्मशून्योऽपि सन्नहं तथाऽव्ययात्मापि अनश्वरस्वभावोऽपि सन् तथा ईश्वरोऽपि कर्म्मपारतन्त्र्यरहितोऽपि सन् स्वमायया सम्भवामि सम्यगप्रच्युतज्ञानबलवीर्य्यादिशक्त्यैव भवामि, ननु तथापि षोड़शकलात्मकलिङ्गदेहशून्यस्य च तव कुतो जन्म इत्यत उक्तं स्वां शुद्धसत्त्वात्मिकां प्रकृतिमधिष्ठाय स्वीकृत्य विशुद्धोर्ज्जितसत्त्वमूर्त्त्या स्वेच्छयावतरामीत्यर्थः ॥ ६ ॥

यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहम्॥ ७
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे॥ ८
जन्म कर्म्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्ज्जुन॥ ९
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः।

---

कदा सम्भवसीत्यपेक्षायामाह यदा यदेति। ग्लानिर्हानिः। अभ्युत्थानमाधिक्यम्॥ ७॥

किमर्थमित्यपेक्षायामाह परित्राणायेति। साधूनां स्वधर्म्मवर्त्तिनां रक्षणाय, दुष्टं कर्म्म कुर्व्वन्तीति दुष्कृतस्तेषां वधाय च, एवं धर्म्मसंस्थापनार्थाय साधुरक्षणेन दुष्टवधेन च धर्म्मं स्थिरीकर्त्तुं युगे युगे तत्तदवसरे सम्भवामीत्यर्थः, नचैवं दुष्टनिग्रहं कुर्व्वतोऽपि नैर्घृण्यं शङ्कनीयम्। यथाहुः,—"लालने ताड़ने मातुर्नाकारुण्यं यथार्भके। तद्वदेव महेशस्य नियन्तुर्गुणदोषयोः" इति॥ ८॥

एवंविधानामीश्वरजन्मकर्म्मणां ज्ञाने फलमाह जन्मेति। स्वेच्छया कृतं मम जन्म कर्म्म च धर्म्मपालनरूपं दिव्यमलौकिकं तत्त्वतः परानुग्रहार्थमेवेति यो वेत्ति, स देहाभिमानं त्यक्त्वा पुनर्ज्जन्म संसारं नैति न प्राप्नोति, किन्तु मामेव प्राप्नोति॥ ९॥

कथं जन्मकर्म्मज्ञाने त्वत्प्राप्तिः स्यादित्यत आह वीतरागेति। अहं शुद्धसत्त्वावतारैर्धर्म्मपालनं करोमीति मदीयं परमकारुणिकत्वं ज्ञात्वा वीता विगता रागभयक्रोधा येभ्यस्ते चित्तविक्षेपाभावान्मन्मया मदेकचित्ता भूत्वा मामेवोपाश्रिताः सन्तो मत्प्रसाद-

बहवो ज्ञानतपसा पूता मद्भावमागताः॥ १०
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्व्वशः॥ ११
काङ्क्षन्तः कर्म्मणां सिद्धिं यजन्त इह देवताः।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्म्मजा॥ १२

---

लब्धं यदात्मज्ञानञ्च तपश्च तत् परिपाकहेतुः स्वधर्म्मः। तदेक-वद्भावः। तेन ज्ञानतपसा पूताः शुद्धा निरस्ताज्ञानतत्कार्य्यमला मद्भावं मत्सायुज्यं प्राप्ता बहवः, न त्वधुनैव प्रवृत्तोऽयं मद्भक्तिमार्ग इत्यर्थः। तदेवं तान्यहं वेद सर्व्वाणीत्यादिना विद्याविद्योपाधिभ्यां तत्त्वंपदार्थावीश्वरजीवौ प्रदर्श्य ईश्वरस्य चाविद्याभावेन नित्य-शुद्धत्वाज्जीवस्य चेश्वरप्रसादलब्धज्ञानेनाज्ञाननिवृत्तेः शुद्धस्य सत-श्चिद्रूपेण तदैक्यमुक्तमिति द्रष्टव्यम्॥ १०॥

ननु तर्हि किं त्वय्यपि वैषम्यमस्ति, यस्मादेवं त्वदेकशरणाना-मेवात्मभावं ददासि, नान्येषां सकामानामित्यत आह य इति। यथा येन प्रकारेण सकामतया निष्कामतया वा ये मां भजन्ति, तानहं तथैव तदपेक्षितफलदानेन भजामि अनुगृह्णामि, न तु सकामा मां विहायेन्द्रादीनेव ये भजन्ते तानहमुपेक्ष इति मन्तव्यम्। यतः सर्व्वशः सर्व्वप्रकारैरिन्द्रादिसेवका अपि ममैव वर्त्म भजनमार्ग-मनुवर्त्तन्ते इन्द्रादिरूपेणापि ममैव सेव्यत्वात्॥ ११॥

तर्हि मोक्षार्थमेव किमिति सर्व्वे त्वां न भजन्तीत्यत आह काङ्क्षन्त इति। कर्म्मणां सिद्धिं कर्म्मफलं काङ्क्षन्तः प्रायेणेह मनुष्य-लोके इन्द्रादिदेवता एव यजन्ते, न तु साक्षान्मामेव, हि यस्मात् कर्म्मजा सिद्धिः कर्म्मजं फलं शीघ्रं भवति न तु ज्ञानफलं कैवल्य दुष्प्राप्यत्वाज्ज्ञानस्य॥ १२॥

चातुर्व्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम्॥ १३
न मां कर्म्माणि लिम्पन्ति न मे कर्म्मफले स्पृहा।
इति मां योऽभिजानाति कर्म्मभिर्न स बध्यते॥ १४
एवं ज्ञात्वा कृतं कर्म्म पूर्व्वैरपि मुमुक्षुभिः।

---

ननु केचित् सकामतया प्रवर्त्तन्ते केचिन्निष्कामतयेति कर्म्मवैचित्र्यं, तत्कर्त्तृणाञ्च ब्राह्मणादीनामुत्तममध्यमादिवैचित्र्यं कुर्व्वतस्तव कथं वैषम्यं नास्तीत्याशङ्क्याह चातुर्व्वर्ण्यमिति। चत्वारो वर्णा एवेति चातुर्व्वर्ण्यम्। स्वार्थे ष्यञ् प्रत्ययः। अयमर्थः,—सत्त्वप्रधाना ब्राह्मणास्तेषां शमदमादीनि कर्म्माणि, सत्त्वरजःप्रधानाः क्षत्रियास्तेषां शौर्य्ययुद्धादीनि कर्म्माणि, रजस्तमःप्रधाना वैश्यास्तेषाञ्च कृषिवाणिज्यादीनि कर्म्माणि, तमःप्रधानाः शूद्रास्तेषाञ्च त्रैवर्णिकशुश्रूषादीनि कर्म्माणीत्येवं गुणानां कर्म्मणाञ्च विभागैश्चातुर्व्वर्ण्यं मयैव सृष्टमिति सत्यं, तथाप्येवं तस्य कर्त्तारमपि फलतोऽकर्त्तारमेव मां विद्धि, तत्र हेतुरव्ययम् आसक्तिराहित्येन श्रमरहितम्॥ १३॥

तदेव दर्शयन्नाह मामिति। कर्म्माणि विश्वसृष्ट्यादीन्यपि मां न लिम्पन्ति आसक्तं न कुर्व्वन्ति निरहङ्कारत्वादाप्तकामत्वेन मम कर्म्मफले स्पृहाभावाच्च मां न लिम्पन्तीति किं वक्तव्यं, यतः कर्म्मलेपराहित्येन मां योऽभिजानाति, सोऽपि कर्म्मभिर्न बध्यते, मम निर्लेपत्वकारणं निरहङ्कारत्वनिस्पृहत्वादिकं जानतस्तस्याप्यहङ्कारादिशैथिल्यात्॥ १४॥

ये यथा मामित्यादि चतुर्भिः श्लोकैः प्रासङ्गिकमीश्वरस्य वैषम्यं परिहृत्य पूर्व्वोक्तमेव कर्म्मयोगं प्रपञ्चयितुमनुसारयति एवमिति।

कुरु कर्म्मैव तस्मात् त्वं पूर्व्वैः पूर्व्वतरं कृतम् ॥ १५
किं कर्म्म किमकर्म्मेति कवयोऽप्यत्र मोहिताः।
तत् ते कर्म्म प्रवक्ष्यामि यज् ज्ञात्वा मोक्ष्यसेऽशुभात्॥१६
कर्म्मणो ह्यपि बोद्धव्यं बोद्धव्यञ्च विकर्म्मणः।
अकर्म्मणश्च बोद्धव्यं गहना कर्म्मणो गतिः ॥ १७
कर्म्मण्यकर्म्म यः पश्येदकर्म्मणि च कर्म्म यः।

---

अहङ्कारादिराहित्येन कृतं कर्म्म बन्धकं न भवतीत्येवं ज्ञात्वा पूर्व्वैर्जनकादिभिरपि मुमुक्षुभिः सत्त्वशुद्ध्यर्थं पूर्व्वतरं युगान्तरेष्वपि कृतं, तस्मात् त्वमपि प्रथमं कर्म्मैव कुरु ॥ १५ ॥

तच्च तत्त्वविद्भिः सह विचार्य्य कर्त्तव्यं, न लोकपरम्परामात्रेणेत्याह किं कर्म्मेति। किं कर्म्म कीदृशं कर्म्म करणं, किमकर्म्म कीदृशं कर्म्माकरणम्, इत्यस्मिन्नर्थे विवेकिनोऽपि मोहिताः, अतो यज्ज्ञात्वा यदनुष्ठायाशुभात् संसारान्मोक्ष्यसे मुक्तो भविष्यसि, तत् कर्म्माकर्म्म च तुभ्यमहं प्रवक्ष्यामि, तत् शृणु ॥ १६ ॥

ननु लोकप्रसिद्धमेव कर्म्म देहादिव्यापारात्मकम्, अकर्म्म च तदव्यापारात्मकम्, अतः कथमुच्यते कवयोऽप्यत्र मोहं प्राप्ता इति, तत्राह कर्म्मण इति। कर्म्मणो विहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति, न तु लोकप्रसिद्धमात्रमेव, अकर्म्मणोऽविहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति, विकर्म्मणोऽविहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति, यतः कर्म्मणो गतिर्गहना, कर्म्म इत्युपलक्षणार्थम्, कर्म्माकर्म्मविकर्म्मणां तत्त्वं दुर्व्विज्ञेयमित्यर्थः ॥ १७ ॥

तदेव कर्म्मादीनां दुर्व्विज्ञेयत्वं दर्शयन्नाह कर्म्मणीति। परमेश्वराराधनलक्षणे कर्म्मणि कर्म्मविषये अकर्म्म कर्म्मेदं न भवतीति यः पश्येत् तस्य ज्ञानहेतुत्वेन बन्धकत्वाभावात्, अकर्म्मणि च

**स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्म्मकृत् ॥ १८**
**यस्य सर्व्वे समारम्भाः कामसङ्कल्पवर्ज्जिताः ।**

---

विहिताकरणे कर्म्म यः पश्येत् प्रत्यवायोत्पादकत्वेन बन्धहेतुत्वात्, मनुष्येषु कर्म्म कुर्व्वाणेषु स बुद्धिमान् व्यवसायात्मकबुद्धिमत्त्वाच्छ्रेष्ठः। तं प्रस्तौति,—स युक्तो योगी तेन कर्म्मणा ज्ञानयोगावाप्तेः, स एव कृत्स्नकर्म्मकर्त्ता च सर्व्वतः संप्लुतोदकस्थानीये च तस्मिन् कर्म्मणि सर्व्वकर्म्मफलानामन्तर्भावात्। तदेवमारुरुक्षोः कर्म्मयोगाधिकारावस्थायां न कर्म्मणामनारम्भादित्यादिनोक्त एव कर्म्मयोगः स्पष्टीकृतस्तत्प्रपञ्चरूपत्वाचास्य प्रकरणस्य न पौनरुक्त्यदोषः, अनेनैव योगारूढ़ावस्थायां यस्त्वात्मरतिरेव स्यादित्यादिना यः कर्म्मानुपयोग उक्तस्तस्याप्यर्थात् प्रपञ्चः कृतो वेदितव्यः, यदारुरुक्षोरपि कर्म्म बन्धकं न भवति, तदारूढ़स्य कुतो बन्धकं स्यादित्यत्रादि श्लोको युज्यते। यदा कर्म्मणि देहेन्द्रियादिव्यापारे वर्त्तमानेऽप्यात्मनो देहादिव्यतिरेकानुभवेन अकर्म्म स्वाभाविकं नैष्कर्म्म्यमेव यः पश्येत्, तथा अकर्म्मणि च ज्ञानरहिते दुःखबुद्ध्या कर्म्मणां त्यागे कर्म्म यः पश्येत् तस्य प्रयत्नसाध्यत्वेन मिथ्याचारत्वात्। तदुक्तं कर्म्मेन्द्रियाणि संयम्येत्यादिना। य एवम्भूतः स तु सर्व्वेषु मनुष्येषु बुद्धिमान् पण्डितः, तत्र हेतुर्यतः कृत्स्नानि सर्व्वाणि यदृच्छया प्राप्तानि आहारादीनि कर्म्माणि कुर्व्वन्नपि स युक्त एव अकर्त्रात्मज्ञानेन समाधिस्थ एवेत्यर्थः। अनेनैव ज्ञानिनः स्वभावादापन्नं कलञ्जभक्षणादिकं न दोषाय, अज्ञस्य तु रागतः कृतं दोषायेति विकर्म्मणोऽपि तत्त्वं निरूपितं द्रष्टव्यम् ॥ १८ ॥

कर्म्मण्यकर्म्म यः पश्येदित्यनेन श्रुत्यर्थार्थापत्तिभ्यां यदुक्तमर्थद्वयं, तदेव स्पष्टयति यस्येति पञ्चभिः। सम्यगारभ्यन्त इति समारम्भाः

ज्ञानाग्निदग्धकर्म्माणं तमाहुः पण्डितं बुधाः ॥ १९
त्यक्त्वा कर्म्मफलासङ्गं नित्यतृप्तो निराश्रयः।
कर्म्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ॥ २०
निराशीर्यतचित्तात्मा त्यक्तसर्व्वपरिग्रहः।
शारीरं केवलं कर्म्म कुर्व्वन्नाप्नोति किल्बिषम् ॥ २१
यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२

---

कर्म्माणि, काम्यत इति कामः फलं, तत्सङ्कल्पेन वर्ज्जिता यस्य भवन्ति तं पण्डितमाहुः। अत्र हेतुर्यतस्तैः समारम्भैः शुद्धे चित्ते सति जातेन ज्ञानाग्निना दग्धानि अकर्म्मतां नीतानि कर्म्माणि यस्य तम् आरूढ़ावस्थायान्तु कामः फलहेतुविषयः, तदर्थमिदं कर्त्तव्यमिति कर्त्तव्यविषयः सङ्कल्पस्ताभ्यां वर्ज्जिताः। शेषं स्पष्टम् ॥१९

किञ्च त्यक्त्वेति। कर्म्मणि तत्फले चासक्तिं त्यक्त्वा नित्येन निजानन्देन तृप्तः अतएव योगक्षेमार्थमाश्रयणीयरहितः, एवम्भूतो यः स स्वाभाविके विहिते वा कर्म्मणि अभितः प्रवृत्तोऽपि किञ्चिदपि नैव करोति, तस्य कर्म्म अकर्म्मतामापद्यत इत्यर्थः ॥ २० ॥

किञ्च निराशीरिति। निर्गता आशिषः कामना यस्मात्, यतं नियतं चित्तमात्मा शरीरञ्च यस्य, त्यक्ताः सर्व्वे परिग्रहा येन सः, शारीरं शरीरमात्रनिर्व्वर्त्त्यं कर्त्तृत्वाभिनिवेशरहित कर्म्म कुर्व्वन्नपि किल्बिष बन्धं न प्राप्नोति, योगारूढ़पक्षे शरीरनिर्व्वाहमात्रोपयोगि स्वाभाविकं भिक्षाटनादि कुर्व्वन्नपि किल्बिषं विहिताकरणनिमित्तदोषं न प्राप्नोति ॥ २१ ॥

किञ्च यदृच्छालाभेति। अप्रार्थितोपस्थितो लाभो यदृच्छालाभस्तेन सन्तुष्टः, द्वन्द्वानि शीतोष्णादीन्यतीतोऽतिक्रान्तस्तत्सहन-

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः कर्म्म समग्रं प्रविलीयते ॥ २३
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना ॥ २४
दैवमेवापरे यज्ञं योगिनः पर्य्युपासते।

---

शील इत्यर्थः, विमत्सरो निर्व्वैरः, यदृच्छालाभस्यापि सिद्धावसिद्धौ च समो हर्षविषादरहितः, य एवम्भूतः स पूर्व्वोक्तरभूमिकयोर्यथायथं विहितं स्वाभाविकं वा कर्म्म कृत्वा बन्धं न प्राप्नोति ॥ २२ ॥

किञ्च गतेति। गतसङ्गस्य निष्कामस्य रागादिभिर्मुक्तस्य, ज्ञानेऽवस्थितं चेतो यस्य, यज्ञाय परमेश्वराराधनार्थं कर्म्म चरतः सतः समग्रं सवासनं कर्म्म प्रविलीयते अकर्म्मभावमापद्यते। आरूढ़योगपक्षे यज्ञाय यज्ञरक्षणार्थं लोकसंग्रहार्थं कर्म्म कुर्व्वत इत्यर्थः ॥ २३ ॥

तदेवं परमेश्वराराधनलक्षणं कर्म्म ज्ञानहेतुत्वेन बन्धकत्वाभावादकर्म्मैव आरूढ़ावस्थायान्तु अकर्त्रात्मज्ञानबाधितत्वात् स्वाभाविकमपि कर्म्म अकर्म्मैवेति कर्म्मण्यकर्म्म यः पश्येदित्यनेनोक्तः कर्म्मप्रविलयः प्रपञ्चितः, इदानीं कर्म्मणि तदङ्गेषु च ब्रह्मैवानुस्यूतं पश्यतः कर्म्मप्रविलयमाह ब्रह्मार्पणमिति। अर्प्यतेऽनेनेत्यर्पणं जुह्वादि तदपि ब्रह्मैव, अर्प्यमाणं हविरपि घृतादिकं ब्रह्मैव, ब्रह्मैवाग्निस्तस्मिन् ब्रह्मणा कर्त्रा हुतं होमोऽग्निश्च कर्त्ता च क्रिया च ब्रह्मैवेत्यर्थः, एवं ब्रह्मण्येव कर्म्मात्मके समाधिश्चित्तैकाग्र्यं यस्य तेन ब्रह्मैव गन्तव्यं प्राप्यं, नतु फलान्तरमित्यर्थः ॥ २४ ॥

तदेवं यज्ञत्वेन सम्पादितं सर्व्वत्र ब्रह्मदर्शनलक्षणं ज्ञानं सर्व्वयज्ञोपायप्राप्यत्वात् सर्व्वयज्ञेभ्यः श्रेष्ठमित्येवं स्तोतुमधिकारिभेदेन

ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६

सर्व्वाणीन्द्रियकर्म्माणि प्राणकर्म्माणि चापरे।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७

---

ज्ञानोपायभूतान् बहून् यज्ञानाह दैवमित्यादिभिरष्टभिः। देवा इन्द्रवरुणादय इज्यन्ते यस्मिन्। एवकारेणेन्द्रादिषु ब्रह्मबुद्धि-राहित्यं दर्शितम्। तदेवं यज्ञमपरे कर्म्मयोगिणः पर्य्युपासते श्रद्धयानुतिष्ठन्ति, अपरे तु ज्ञानयोगिनो ब्रह्मरूपेऽग्नौ यज्ञं नैवोपायेन ब्रह्मार्पणमित्याद्युक्तप्रकारेण यज्ञमपजुह्वति यज्ञादिसर्व्वकर्म्माणि प्रविलापयन्तीत्यर्थः, सोऽयं ज्ञानयज्ञः ॥ २५ ॥

श्रोत्रादीनीति। अन्ये नैष्ठिका ब्रह्मचारिणस्तत्तदिन्द्रियसंयम-रूपेष्वग्निषु श्रोत्रादीनि जुह्वति प्रविलापयन्ति इन्द्रियाणि निरुध्य संयमप्रधानास्तिष्ठन्तीत्यर्थः, इन्द्रियाण्येवाग्नयस्तेषु शब्दादीनन्ये गृहस्था जुह्वति विषयभोगसमयेऽप्यनासक्ताः सन्तोऽग्नित्वेन भावितेषु इन्द्रियेषु हविष्ट्वेन भावितान् शब्दादीन् प्रक्षिपन्तीत्यर्थः ॥ २६ ॥

किञ्च सर्व्वाणीति। अपरे ध्याननिष्ठा बुद्धीन्द्रियाणां श्रोत्रा-दीनां कर्म्माणि श्रवणदर्शनादीनि कर्म्मेन्द्रियाणां वाक्पाण्यादीनां कर्म्माणि वचनोपादानादीनि, प्राणानाञ्च दशानां कर्म्माणि प्राणस्य वहिर्गमनम्, अपानस्याधोगमनं, व्यानस्य व्यायनाकुञ्चनप्रसारणादीनि, समानस्याशितपीतादीनां समुन्नयनम्, उदानस्य ऊर्द्ध्वनयनम्, "उद्गारे नाग आख्यातः कूर्म्म उन्मीलने स्मृतः। कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे। न जहाति मृतञ्चापि सर्व्वव्यापी धनञ्जयः" इत्येवं-रूपाणि जुह्वति आत्मनि संयमो ध्यानैकाग्र्यं स एव योगः स एवा-

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः॥ २८
अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः।
अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति॥ २९

---

ग्निस्तस्मिन् ज्ञानेन ध्येयविषयेण दीपिते प्रज्वलिते ध्येयं सम्यग्ज्ञात्वा तस्मिन् मनः संयम्य तानि सर्व्वाणि कर्म्माणि उपरमयन्तीत्यर्थः॥ २७

किञ्च द्रव्ययज्ञा इत्यादि। द्रव्यदानमेव यज्ञो येषां ते द्रव्ययज्ञाः, कृच्छ्रचान्द्रायणादि तप एव यज्ञो येषां ते तपोयज्ञाः, योगश्चित्त-वृत्तिनिरोधलक्षणः समाधिः स एव यज्ञो येषां ते योगयज्ञाः, स्वाध्यायेन वेदेन श्रवणमननादिना यत् तदर्थज्ञानं तदेव यज्ञो येषां ते यद्वा वेदपाठयज्ञास्तदर्थज्ञानयज्ञाश्चेति द्विविधा यतयः प्रयत्न-शीलाः सम्यक् शितं निशितं तीक्ष्णीकृतं व्रतं येषां ते॥ २८॥

किञ्च अपाने इति। अपानेऽधोवृत्तौ प्राणमूर्द्धवृत्तिं पूरकेण जुह्वति पूरककाले प्राणमपानेनैकीकुर्व्वन्ति, तथा कुम्भकेन प्राणा-पानयोरूर्द्ध्वाधोगती रुद्ध्वा रेचककालेऽपानं प्राणे जुह्वति एवं पूरक-कुम्भकरेचकैः प्राणायामपरायणा अपरे इत्यर्थः। किञ्च अपरे इति। अपरे त्वाहारसङ्कोचमभ्यस्यन्तः स्वयमेव जीर्य्यमाणे-ष्विन्द्रियेषु तत्तदिन्द्रियवृत्तिलयं होमं भावयन्तीत्यर्थः। यद्वा अपाने जुह्वति प्राणं प्राणेऽपानं तथापर 'इत्यनेन पूरकरेचकयोरावर्त्त्य-मानयोर्हंसः सोऽहमित्यनुलोमतः प्रतिलोमतश्चाभिव्यज्यमानेनाजपा-मन्त्रेण तत्त्वं पदार्थैक्यं व्यतीहारेण भावयन्तीत्यर्थः। तदुक्तं योगशास्त्रे,—"सकारेण वहिर्याति हकारेण विशेत् पुनः। प्राणस्तत्र स एवाहमहं स इति चिन्तयेत्" इति। प्राणापानगती रुद्ध्वेत्यनेन

सर्व्वेऽप्येते यज्ञविदो यज्ञक्षयितकल्मषाः।
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ॥ ३०
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।
कर्म्मजान् विद्धि तान् सर्व्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२

---

श्लोकेन प्राणायामयज्ञा अपरे कथ्यन्ते, तत्रायमर्थः,—द्वौ भागौ पूरयेदन्नैर्जलेनैकं प्रपूरयेत्। मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्" इत्येवमादिवचनोक्तो नियत आहारो येषां ते कुम्भकेन प्राणापानगती रुद्ध्वा प्राणसंयमनपरायणाः सन्तः प्राणानिन्द्रियाणि प्राणेषु जुह्वति कुम्भकेन हि सर्व्वे प्राणा एकीभवन्ति तत्रैव लीयमानेष्विन्द्रियेषु होमं भावयन्तीत्यर्थः। तदुक्तं योगशास्त्रे—"यथा यथा सदाभ्यासान्मनसः स्थिरता भवेत्। वायुवाक्कायदृष्टीनां स्थिरता च तथा तथा" इति॥२९

तदेवमुक्तानां द्वादशानां यज्ञविदां फलमाह सर्व्वेऽप्येत इति। यज्ञान् विन्दन्ति लभन्त इति यज्ञविदो यज्ञज्ञा इति वा, यज्ञैः क्षयितं नाशितं कल्मषं यैः, यज्ञान् कृत्वावशिष्टकालेऽनिषिद्धमन्नममृतरूपं भुञ्जत इति तथा, ते सनातनं नित्यं ब्रह्मज्ञानद्वारेण प्राप्नुवन्ति। तदकरणे दोषमाह नायमिति। अयमल्पसुखोऽपि मनुष्यलोको-ऽयज्ञस्य नास्ति कुतोऽन्यो बहुसुखः परलोकः अतो यज्ञाः सर्व्वथा कर्त्तव्या इत्यर्थः ॥ ३० ॥ ३१ ॥

ज्ञानयज्ञं स्तोतुमुक्तान् यज्ञानुपसंहरति एवं बहुविधा इति। ब्रह्मणो वेदस्य मुखे वितता वेदेन साक्षादभिहिता इत्यर्थः, तथापि तान् सर्व्वान् वाङ्मनःकायकर्म्मजनितान् आत्मस्वरूपसंस्पर्शरहितान् विद्धि जानीहि आत्मनः कर्म्मणोऽगोचरत्वात्, एवं ज्ञात्वा ज्ञाननिष्ठः सन् संसाराद्विमुक्तो भविष्यसि ॥ ३२ ॥

श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप।
सर्व्वं कर्म्माखिलं पार्थ ज्ञाने परिसमाप्यते॥ ३३
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥ ३४
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।
येन भूतान्यशेषाणि द्रक्ष्यस्यात्मन्यथो मयि॥ ३५
अपि चेदसि पापेभ्यः सर्व्वेभ्यः पापकृत्तमः।

---

ज्ञानयज्ञस्तु श्रेष्ठ इत्याह श्रेयानिति। द्रव्यमयादनात्मव्यापारजन्याद्दैवादियज्ञाज्ज्ञानयज्ञः श्रेष्ठः, यद्यपि ज्ञानस्यापि मनोव्यापाराधीनत्वमस्त्येव तथाप्यात्मस्वरूपस्य ज्ञानस्य मनःपरिणामे अभिव्यक्तिमात्रं न तज्जन्यत्वमिति द्रव्यमयाद्विशेषः, श्रेष्ठत्वे हेतुः सर्व्वं कर्म्माखिलं फलसहितं ज्ञाने परिसमाप्यते अन्तर्भवतीत्यर्थः। "सर्व्वं तदभिसमेति यत् किञ्चित् प्रजाः साधु कुर्व्वन्ति" इति श्रुतेः॥ ३३॥

एवम्भूतात्मज्ञाने साधनमाह तदिति। तज्ज्ञानं विद्धि जानीहि प्राप्नुहीत्यर्थः, ज्ञानिनां प्रणिपातेन नमस्कारेण ततः परिप्रश्नेन कुतोऽयं मम संसारः कथं वा निवर्त्तेत इति परिप्रश्नेन सेवया गुरुशुश्रूषया च, ज्ञानिनः शास्त्रज्ञास्तत्त्वदर्शिनोऽपरोक्षानुभवसम्पन्नाश्च ते तुभ्यं ज्ञानमुपदेशेन सम्पादयिष्यन्ति॥ ३४॥

ज्ञानफलमाह यज्ज्ञात्वेति सार्द्धैस्त्रिभिः यज्ज्ञानं ज्ञात्वा प्राप्य पुनर्बन्धुवधादिनिमित्तं मोहं न प्राप्स्यसि। तत्र हेतुर्येन ज्ञानेन भूतानि अशेषाणि पितृपुत्रादीनि स्वाविद्याविजृम्भितानि आत्मन्येवाभेदेन द्रक्ष्यसि। अथो अनन्तरं आत्मानं मयि परमात्मन्यभेदेन द्रक्ष्यसीत्यर्थः॥ ३५॥

किञ्च अपि चेदिति। सर्व्वेभ्योऽपि पापकारिभ्यो यद्यप्यतिशयेन

सर्व्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ३६
यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्ज्जुन ।
ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा ॥ ३७
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८
श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।

---

पापकारी त्वमसि, तथापि सर्व्वं पापसमुद्रं ज्ञानप्लवेनैव ज्ञान-पोतेनैव सम्यगनायासेन तरिष्यसि ॥ ३६ ॥

समुद्रवत् स्थितस्यैव पापस्य अतिलङ्घनमात्रं न तु पापस्य नाश इति भ्रान्तिं दृष्टान्तेन वारयन्नाह यथैधांसीति । एधांसि काष्ठानि प्रदीप्तोऽग्निर्यथा भस्मीभावं नयति, तथात्मज्ञानस्वरूपोऽग्निः प्रारब्ध-कर्म्मफलव्यतिरिक्तानि सर्व्वाणि कर्म्माणि भस्मीकरोतीत्यर्थः ॥ ३७ ॥

तत्र हेतुमाह न हीति । पवित्रं शुद्धिकरम् इह तपोयोगादिषु मध्ये ज्ञानतुल्यं नास्त्येव, तर्हि सर्व्वेऽपि किमिति आत्मज्ञानमेव नाभ्यस्यन्तीत्यत आह तत् स्वयमिति सार्द्धेन । तदात्मविषये ज्ञानं कालेन महता कर्म्मयोगेण संसिद्धो योग्यतां प्राप्तः सन् स्वयमेवा-नायासेन लभते, न तु कर्म्मयोगं विनेत्यर्थः ॥ ३८ ॥

किञ्च श्रद्धावानिति । श्रद्धावान् गुरूपदिष्टेऽर्थे आस्तिक्य-बुद्धिमान् तत्परस्तदेकनिष्ठः संयतेन्द्रियश्च तज्ज्ञानं लभते नान्यः, अतः श्रद्धादिसम्पत्त्या ज्ञानलाभात् प्राक् कर्म्मयोग एव शुद्ध्यर्थ-मनुष्ठेयः ज्ञानलाभानन्तरन्तु न तस्य किञ्चित् कर्त्तव्यमित्याह ज्ञानं लब्ध्वा तु मोक्षमचिरेण प्राप्नोति ॥ ३९ ॥

नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४०
योगसंन्यस्तकर्म्माणं ज्ञानसंछिन्नसंशयम्।
आत्मवन्तं न कर्म्माणि निबध्नन्ति धनञ्जय ॥ ४१
तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२
इति ज्ञानयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

ज्ञानाधिकारिणमुक्त्वा तद्विपरीतमनधिकारिणमाह अज्ञश्चेति। अज्ञो गुरूपदिष्टार्थानभिज्ञः, कथञ्चिज्ज्ञाने जातेऽपि तत्राश्रद्दधानश्च, जातायामपि श्रद्धायां ममेदं सिध्येन्न वेति संशयाक्रान्तचित्तश्च विनश्यति स्वार्थाद्भ्रश्यति, एतेषु त्रिष्वपि संशयात्मा सर्व्वथा नश्यति, यतस्तस्यायं लोको नास्ति धनार्ज्जनविवाहादासिद्धेः, न च परलोको धर्म्मस्यानिष्पत्तेः, नच सुखं संशयेनैव भोगस्याप्यसम्भवात् ॥ ४० ॥

अध्यायद्वयोक्तां पूर्व्वापरभूमिकाभेदेन कर्म्मज्ञानमयीं द्विविधां ब्रह्मनिष्ठामुपसंहरति द्वाभ्याम्। योगेन परमेश्वराराधनरूपेण तस्मिन् सन्न्यस्तानि समर्पितानि कर्म्माणि येन तं, ज्ञानेन आत्मबोधेन संछिन्नः संशयो देहाभिमानलक्षणो यस्य तमात्मवन्तमप्रमादिनं कर्म्माणि लोकसंग्रहार्थानि स्वाभाविकानि वा न निबध्नन्ति ॥ ४१ ॥

तस्मादज्ञानेति। यस्मादेवं तस्मादात्मनोऽज्ञानेन सम्भूतं हृदि स्थितमेनं संशयं शोकादिनिमित्तं देहात्मविवेकज्ञानखड्गेन छित्त्वा कर्म्मयोगमातिष्ठ आश्रय, तत्र प्रथमं प्रस्तुताय युद्धायोत्तिष्ठ। हे भारत इति क्षत्रियत्वेन युद्धस्य धर्म्मत्वं दर्शितम् ॥ ४२ ॥

पुमवस्थाविभेदेन कर्म्मज्ञानमयी द्विधा।
निष्ठोक्ता येन तं वन्दे शौरिं संशयसंछिदम् ॥

इति श्रीधरस्वामिकृतटीकायां चतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः ।

अर्ज्जुन उवाच ।

सन्न्यासं कर्म्मणां कृष्ण पुनर्योगञ्च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १

श्रीभगवानुवाच ।

सन्न्यासः कर्म्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्म्मसन्न्यासात् कर्म्मयोगो विशिष्यते ॥ २

---

निवार्य्य संशयं जिष्णोः कर्म्मसन्न्यासयोगयोः ।
जितेन्द्रियस्य च यतेः पञ्चमे मुक्तिमब्रवीत् ॥

अज्ञानसम्भूतं संशयं ज्ञानासिना छित्त्वा कर्म्मयोगमातिष्ठेत्युक्तं, तत्र पूर्व्वापरविरोधं मन्वानोऽर्ज्जुन उवाच सन्न्यासमिति । यस्त्वात्मरतिरेव स्यादित्यादिना, सर्व्वं कर्म्माखिलं पार्थेत्यादिना च ज्ञानिनः कर्म्मसन्न्यासं कथयसि, ज्ञानासिना संशयं छित्त्वा योगमातिष्ठेति पुनर्योगञ्च कथयसि, न च कर्म्मसन्न्यासः कर्म्मयोगश्चैकस्यैकदैव सम्भवतो विरुद्धस्वरूपत्वात् तस्मादेतयोर्म्मध्ये एकस्मिन्ननुष्ठातव्ये सति मम यत् श्रेयः सुनिश्चितं तदेकं ब्रूहि ॥ १ ॥

अत्रोत्तरं श्रीभगवानुवाच सन्न्यास इति । अयं भावः, न हि वेदान्तवेद्यात्मतत्त्वज्ञं प्रति कर्म्मयोगमहं ब्रवीमि यतः पूर्व्वोक्तेन सन्न्यासेन विरोधः स्यात्, अपि तु देहात्माभिमानिनं त्वां बन्धुवधादिनिमित्तशोकमोहादिकृतमेनं संशयं देहात्मविवेकज्ञानासिना छित्त्वा परमात्मज्ञानोपायभूतं कर्म्मयोगमातिष्ठेति ब्रवीमि, कर्म्मयोगेन

ज्ञेयः स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥ ३
सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४

---

शुद्धचित्तस्यात्मतत्त्वज्ञाने जाते सति तत्परिपाकार्थं ज्ञाननिष्ठाङ्गत्वेन सन्न्यासः पूर्व्वमुक्तः, एवञ्च सत्यङ्गप्रधानयोर्विकल्पायोगात् सन्न्यासः कर्म्मयोगश्चेत्येतावुभावपि भूमिकाभेदेन समुच्चितावेव निःश्रेयसं साधयतः, तथापि तयोर्म्मध्ये कर्म्मसन्न्यासात् सकाशात् कर्म्मयोगो विशिष्टो भवतीति ॥ २ ॥

कुत इत्यपेक्षायां सन्न्यासित्वेन कर्म्मयोगिनं स्तुवंस्तस्य श्रेष्ठत्वं दर्शयति ज्ञेय इति। रागद्वेषादिराहित्येन परमेश्वरार्थं कर्म्माणि योऽनुतिष्ठति स नित्यं कर्म्मानुष्ठानकालेऽपि सन्न्यासीत्येव ज्ञेयः। तत्र हेतुः, निर्द्वन्द्वो रागद्वेषादिद्वन्द्वशून्यो हि शुद्धचित्तो ज्ञानद्वारा सुखमनायासेनैव संसारात् प्रमुच्यते ॥ ३ ॥

यस्मादेवमङ्गप्रधानत्वेनोभयोरवस्थाभेदेन क्रमसमुच्चयोऽतो विकल्पमङ्गीकृत्योभयोः कः श्रेष्ठ इति प्रश्नोऽज्ञानामेवोचितः न विवेकिनामित्याह साङ्ख्ययोगाविति। साङ्ख्यशब्देन ज्ञाननिष्ठावाचिना तदङ्गसन्न्यासं लक्षयति, सन्न्यासकर्म्मयोगावेकफलौ सन्तौ पृथक् स्वतन्त्राविति बाला अज्ञा एव प्रवदन्ति न तु पण्डिताः। तत्र हेतुः अनयोरेकमपि सम्यगास्थित आश्रितवानुभयोः फलमाप्नोति। तथा हि कर्म्मयोगं सम्यगनुतिष्ठन् शुद्धचित्तः सन् ज्ञानद्वारा यदुभयोः फलं कैवल्यं तद्विन्दतीति सन्न्यासं सम्यगास्थितोऽपि पूर्व्वमनुष्ठितस्य कर्म्मयोगस्यापि परम्परया यत् फलं कैवल्यं तद्विन्दतीति न पृथक्फलत्वमनयोरित्यर्थः ॥ ४ ॥

यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति॥ ५

सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति॥ ६

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः।
सर्व्वभूतात्मभूतात्मा कुर्व्वन्नपि न लिप्यते॥ ७

---

एतदेव स्फुटयति यत् साङ्ख्यैरिति। साङ्ख्यैर्ज्ञाननिष्ठैः सन्न्यासिभिर्यत् स्थानं मोक्षाख्यं प्रकर्षेण साक्षादवाप्यते, योगैरिति अर्श-आदित्वान्मत्वर्थीयोऽत्प्रत्ययो द्रष्टव्यस्तेन कर्म्मयोगिभिरपि तदेव ज्ञानद्वारेण गम्यतेऽवाप्यत इत्यर्थः, अतः साङ्ख्यञ्च योगञ्चैकफलत्वेनैकं यः पश्यति स एव सम्यक् पश्यति॥ ५॥

यदि कर्म्मयोगिणोऽप्यन्ततः सन्न्यासेनैव ज्ञाननिष्ठा, तर्हि आदित एव सन्न्यासः कर्त्तुं युक्त इति मन्वानं प्रत्याह सन्न्यासस्त्विति। अयोगतः कर्म्मयोगं विना सन्न्यासः दुःखं दुःखहेतुरशक्य इत्यर्थः चित्तशुद्ध्यभावेन ज्ञाननिष्ठाया असम्भवात्, योगयुक्तस्तु शुद्धचित्ततया मुनिः सन्न्यासी भूत्वा अचिरेण ब्रह्माधिगच्छति अपरोक्षं जानाति। अतश्चित्तशुद्धेः प्राक् कर्म्मयोग एव सन्न्यासादविशिष्यत इति पूर्व्वोक्तं सिद्धम्। तदुक्तं वार्त्तिककृद्भिः, "प्रमादिनो वहिश्चित्ताः पिशुनाः कलहोत्सुकाः। सन्न्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः" इति॥ ६॥

कर्म्मयोगादिक्रमेण ब्रह्माधिगमे सत्यपि तदुपरितनेन कर्म्मणा बद्धः स्यादेवेत्याशङ्क्याह योगयुक्त इति। योगेन युक्तः अतएव विशुद्ध आत्मा चित्तं यस्य अतएव विजित आत्मा शरीरं येन अतएव

नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥ ८
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् ॥ ९
ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १०

---

विजितानीन्द्रियाणि येन ततश्च सर्व्वेषां भूतानामात्मभूत आत्मा यस्य स लोकसंग्रहार्थं स्वाभाविकं वा कर्म्म कुर्व्वन्नपि न लिप्यते ॥ ७

कर्म्म कुर्व्वन्नपि न लिप्यत इत्येतद्विरुद्धमित्याशङ्क्य कर्त्तृत्वाभिमानाभावान्नेत्याह नैवेति द्वाभ्याम् । कर्म्मयोगेण युक्तः क्रमेण तत्त्वविद्भूत्वा दर्शनश्रवणादीनि कुर्व्वन्नपीन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् बुद्ध्या निश्चिन्वन् किञ्चिदप्यहं न करोमीति मन्येत, तत्र दर्शनश्रवणस्पर्शनाघ्राणाशनानि चक्षुरादिज्ञानेन्द्रियव्यापाराः, गतिः पादयोः, स्वापो बुद्धेः, श्वासः प्राणस्य, प्रलपनं वागिन्द्रियस्य, विसर्गः पायूपस्थयोः, ग्रहणं हस्तयोः, उन्मेषनिमेषणे कूर्म्माख्यप्राणस्येति विवेकः, एतानि सर्व्वाणि कुर्व्वन्नपि अनभिमानात् ब्रह्मवित् न लिप्यते । तथाच पारमर्षं सूत्रं,—तदधिगमे उत्तरपूर्व्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति ॥ ८ ॥ ९ ॥

तर्हि यस्य करोमीत्यभिमानोऽस्ति तस्य कर्म्मलेपो दुर्व्वारः, तथा अविशुद्धचित्तत्वात् सन्न्यासोऽपि नास्तीति महत् सङ्कटमापन्नमित्याशङ्क्याह ब्रह्मणीति । ब्रह्मण्याधाय परमेश्वरे समर्प्य तत्फले च सङ्गं त्यक्त्वा यः कर्म्माणि करोति असौ पापेन बन्धहेतुतया पापिष्ठेन पुण्यपापात्मकेन कर्म्मणा न लिप्यते, यथा पद्मपत्रमम्भसि स्थितमपि तेनाम्भसा न लिप्यते तद्वत् ॥ १० ॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
योगिनः कर्म्म कुर्व्वन्ति सङ्गं त्यक्त्वात्मशुद्धये॥ ११

युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।
अयुक्तः कामकारेण फले सक्तो निबध्यते॥ १२

सर्व्वकर्म्माणि मनसा सन्न्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देही नैव कुर्व्वन् न कारयन्॥ १३

---

बन्धकत्वाभावमुक्त्वा मोक्षहेतुत्वं सदाचारेण दर्शयति कायेनेति। कायेन स्नानादि, मनसा ध्यानादि, बुद्ध्या तत्त्वनिश्चयादि, केवलैः कर्म्माभिनिवेशरहितैरिन्द्रियैः श्रवणकीर्त्तनादिलक्षणं कर्म्मफलसङ्गं त्यक्त्वा चित्तशुद्धये कर्म्म योगिनः कुर्व्वन्ति॥ ११॥

ननु कथं तेनैव कर्म्मणा कश्चिन्मुच्यते कश्चिद्बध्यत इति व्यवस्था, अत आह युक्त इति। युक्तः परमेश्वरैकनिष्ठः सन् कर्म्मणां फलं त्यक्त्वा कर्म्माणि कुर्व्वन्नात्यन्तिकीं शान्तिं मोक्षं प्राप्नोति, अयुक्तस्तु वहिर्म्मुखः कामकारेण कामतः प्रवृत्त्या फले आसक्तो नितरां बन्धं प्राप्नोति॥ १२॥

एवं तावत् चित्तशुद्धिशून्यस्य सन्न्यासात् कर्म्मयोगो विशिष्यत इत्येतत् प्रपञ्चितम्, इदानीं शुद्धचित्तस्य सन्न्यासः श्रेष्ठ इत्याह सर्व्वकर्म्माणीति। वशी जितचित्तः सर्व्वकर्म्माणि विक्षेपकाणि मनसा विवेकयुक्तेन सन्न्यस्य सुखं यथा भवत्येवं ज्ञाननिष्ठः सन्नास्ते, क्वास्त इत्यत आह नवद्वारे, नेत्रे नासिके कर्णौ मुखञ्चेति सप्त शिरोगतानि अधोगते द्वे पायूपस्थरूपे इत्येवं नवद्वाराणि यस्मिन् पुरे पुरवदहङ्कारशून्ये देहे देही अवतिष्ठते। अहङ्काराभावादेव स्वयं तेन देहेन नैव कुर्व्वन्, ममकाराभावात् न कारयन्निति अशुद्धचित्तादव्यावृत्तिरुक्ता, अशुद्धचित्तो हि सन्न्यस्य पुनः करोति कारयति च, न त्वयं तथा, अतः सुखमास्त इत्यर्थः॥ १३॥

न कर्त्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः।
न कर्म्मफलसंयोगं स्वभावस्तु प्रवर्त्तते ॥ १४
नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५

---

ननु एष एव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीयते, एष एवासाधु कर्म्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषत इत्यादि श्रुतेः परमेश्वरेणैव शुभाशुभफलेषु कर्म्मसु कर्त्तृत्वेन प्रयुज्यमानोऽस्वतन्त्रः पुरुषः कथं तानि कर्म्माणि त्यजेत् ईश्वरेणैव ज्ञानमार्ग प्रयुज्यमानः शुभान्यशुभानि च त्यक्ष्यतीति चेत् एवं सति वैषम्यनैर्घृण्याभ्यामीश्वरस्यापि प्रयोजककर्त्तृत्वात् पुण्यपापसम्बन्धः स्यादित्याशङ्क्याह न कर्त्तृमिति द्वाभ्याम्। प्रभुरीश्वरो लोकस्य कर्त्तृत्वादिकं न सृजति किन्तु जीवस्य स्वभावोऽविद्यैव जीवकर्त्तृत्वादिरूपेण प्रवर्त्तते अनाद्यविद्याकामवशात् प्रवृत्तिस्वभावमेव लोकमीश्वर कर्म्मसु नियुङ्क्ते न तु स्वयमेव कर्त्तृत्वादिकमुत्पादयतीत्यर्थः ॥ १४ ॥

यस्मादेवं तस्मान्नादत्त इति। प्रयोजकोऽपि सन् प्रभु कस्यचित् पापं सुकृतञ्च नैवादत्ते न भजते, तत्र हेतुः विभुः परिपूर्णः आप्तकाम इत्यर्थः, यदि हि स्वार्थकामनया कारयेत् तर्हि तथा स्यात् न त्वेतदस्ति आप्तकामस्यैवाचिन्त्यनिजमायया तत्तत्पूर्व्वकर्म्मानुसारेण प्रवर्त्तकत्वात्। ननु भक्ताननुगृह्णतोऽभक्तान्निगृह्णतश्च वैषम्योपलम्भात् कथमाप्तकामत्वमित्यत आह अज्ञानेनेति। निग्रहोऽपि दण्डरूपोऽनुग्रह एवेत्येवमज्ञानेन सर्व्वत्र समः परमेश्वर इत्येवम्भूतं ज्ञानमावृतं तेन हेतुना जन्तवो जीवा मुह्यन्ति वैषम्यं मन्यन्त इत्यर्थः ॥ १५ ॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७
विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८
इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।

---

ज्ञानिनस्तु न मुह्यन्तीत्याह ज्ञानेनेति । आत्मनो भगवतो ज्ञानेन येषां तद्वैषम्योपलम्भकमज्ञानं नाशितं तज्ज्ञानं तेषामज्ञानं नाशयित्वा तत्परं परिपूर्णमीश्वरस्वरूपं प्रकाशयति यथादित्यस्तमो निरस्य समस्तं वस्तुजातं प्रकाशयति तद्वत् ॥ १६ ॥

एवम्भूतेश्वरोपासकानां फलमाह तदिति । तस्मिन्नेव बुद्धि-र्निश्चयात्मिका येषां, तस्मिन्नेव आत्मा प्रयत्नो येषां, तस्मिन्नेव निष्ठा तात्पर्य्यं येषां, तदेव परमयनमाश्रयो येषां, ततश्च तत्प्रसाद-लब्धेनात्मज्ञानेन निर्द्धूतं निरस्तं कल्मषं येषां तेऽपुनरावृत्तिं मुक्तिं यान्ति ॥ १७ ॥

कीदृशास्ते ज्ञानिनो येऽपुनरावृत्तिं मुक्तिं गच्छन्तीत्यपेक्षाया-माह विद्येति । विषमेष्वपि समं ब्रह्मैव द्रष्टुं शीलं येषां ते पण्डिता ज्ञानिन इत्यर्थः । तत्र विद्याविनयाभ्यां युक्ते ब्राह्मणे च शुनो यः पचति तस्मिंश्चेति कर्म्मणो वैषम्यं, गवि हस्तिनि शुनि चेति जातितो वैषम्यं दर्शितम् ॥ १८ ॥

ननु विषमेषु समदर्शनं निषिद्धं कुर्व्वन्तोऽपि कथं ते पण्डिताः, यथाह गोतमः "समासमाभ्यां विषमसमे पूजातः" इति । अस्यार्थः,—

निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९

न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम्।
स्थिरबुद्धिरसंमूढ़ो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २०

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम्।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते।

---

समाय पूजायां विषमे प्रकारे कृते सति विषमाय च समे प्रकारे कृते सति स पूजक इह लोकात् परलोकाच्च हीयत इति। तत्राह इहैव जीवद्भिरेव तैः स्त्र्यत इति सर्गः संसारो जितो निरस्तः। कैः,—येषां मनः साम्ये समत्वे स्थितं, तत्र हेतुः,—हि यस्माद्ब्रह्म समं निर्दोषञ्च तस्मात् ते समदर्शिनो ब्रह्मण्येव स्थिता ब्रह्मभावं प्राप्ता इत्यर्थः। गौतमोक्तस्तु दोषो ब्रह्मभावप्राप्तेः पूर्व्वमेव पूजात इति पूजकावस्थाश्रवणात् ॥ १९ ॥

ब्रह्मप्राप्तस्य लक्षणमाह न प्रहृष्येदिति। ब्रह्मविद्भूत्वा ब्रह्मण्येव यः स्थितः स प्रियं प्राप्य न प्रहृष्येत् प्रहृष्टो हर्षवान् स्यात्, अप्रियं प्राप्य च नोद्विजेत् न विषीदतीत्यर्थः, यतः स्थिरबुद्धिः स्थिरा निश्चला बुद्धिर्यस्य, तत् कुतः—यतोऽसंमूढ़ः निवृत्तमोहः ॥ २० ॥

मोहनिवृत्त्या बुद्धिस्थैर्य्ये हेतुमाह बाह्येति। इन्द्रियैः स्पृश्यन्त इति स्पर्शा विषया बाह्येन्द्रियविषयेष्वसक्तात्मा अनासक्तचित्तः आत्मन्यन्तःकरणे यदुपशमात्मकं सात्त्विकं सुखं तद्विन्दति लभते, स चोपशमसुखं ब्रह्मणि योगेन समाधिना युक्तस्तदैक्यं प्राप्त आत्मा यस्य सोऽक्षयं सुखमश्नुते प्राप्नोति ॥ २१ ॥

ननु प्रियविषयभोगानामपि निवृत्तेः कथं मोक्षः पुरुषार्थः स्यात् तत्राह ये हीति। संस्पृश्यन्त इति संस्पर्शा विषयास्तेभ्यो

आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात्।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः।
स योगी ब्रह्मनिर्व्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४

---

जाता ये भोगाः सुखानि ते हि वर्त्तमानकालेऽपि स्पर्द्धासूयादिव्याप्तत्वादुःखस्यैव योनयः कारणभूताः तथादिमन्तोऽन्तवन्तश्च अतो विवेकी तेषु न रमते ॥ २२ ॥

तस्मान्मोक्ष एव परमः पुरुषार्थस्तस्य च कामक्रोधवेगोऽतिप्रतिपन्थोऽतस्तत्सहनक्षमः एव मोक्षभागीत्याह शक्नोतीहैवेति। कामात् क्रोधाच्चोद्भवति यो वेगः मनोनेत्रादिक्षोभलक्षणस्तमिहैव तदुद्भवसमय एव, यो नरः सोढुं प्रतिरोद्धुं शक्नोति, तदपि न क्षणमात्रं, किन्तु शरीरविमोक्षणात् प्राग्देहपातादित्यर्थः, य एवम्भूतः स एव युक्तः समाहितः सुखी च भवति, नान्यः। यद्वा मरणादूर्द्ध्वं विलसन्तीभिर्युवतिभिरालिङ्ग्यमानोऽपि पुत्रादिभिर्दह्यमानोऽपि यथा प्राणशून्यः कामक्रोधवेगं सहते, तथा मरणात् प्रागपि जीवन्नेव यः सहते, स एव युक्तः सुखी चेत्यर्थः। तदुक्तं वसिष्ठेन—"प्राणे गते यथा देहः सुखदुःखे न विन्दति। तथा चेत् प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत्" इति ॥ २३ ॥

न केवलं कामक्रोधवेगसंवरणमात्रेण मोक्षं प्राप्नोति अपि तु योऽन्तरिति। अन्तरात्मन्येव सुखं यस्य न तु विषयेषु, अन्तरेवारामः क्रीड़ा यस्य न वहिः, अन्तरेव ज्योतिर्दृष्टिर्यस्य न गीतनृत्यादिषु, स एवं ब्रह्मणि भूतः स्थितः सन् ब्रह्मणि निर्व्वाणं लयमधिगच्छति प्राप्नोति ॥ २४ ॥

लभन्ते ब्रह्मनिर्व्वाणमृषयः क्षीणकल्मषाः।
छिन्नद्वैधा यतात्मानः सर्व्वभूतहिते रताः॥ २५
कामक्रोधविमुक्तानां यतीनां यतचेतसाम्।
अभितो ब्रह्मनिर्व्वाणं वर्त्तते विदितात्मनाम्॥ २६
स्पर्शान् कृत्वा वहिर्व्वाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ॥ २७

---

किञ्च लभन्त इति। ऋषयः सम्यग्दर्शिनः, क्षीणं कल्मषं येषां, छिन्नं द्वैधं संशयो येषां, यतः संयत आत्मा चित्तं येषां, सर्व्वेषां भूतानां हिते रताः ये, कृपालवः ब्रह्मनिर्व्वाणं मोक्षं लभन्ते॥ २५॥

किञ्च कामेत्यादि। कामक्रोधाभ्यां विमुक्तानां यतीनां सन्न्यासिनां संयतचित्तानां ज्ञातात्मतत्त्वानामभित उभयतो जीवतां मृतानाञ्च न देहान्त एव तेषां ब्रह्मणि लयः अपि तु जीवतामपि वर्त्तत इत्यर्थः॥ २६॥

स योगी ब्रह्मनिर्व्वाणमित्यादिषु योगी मोक्षमवाप्नोतीत्युक्तं तमेव योगं संक्षेपेणाह स्पर्शानिति द्वाभ्याम्। वाह्या एव स्पर्शा रूपरसादयो विषयाश्चिन्तिताः सन्तोऽन्तः प्रविशन्ति तांस्तच्चिन्तात्यागेन वहिरेव कृत्वा, चक्षुर्भ्रुवोरन्तरे भ्रूमध्य एव कृत्वा, अत्यन्तं नेत्रयोर्निमीलने निद्रया मनो लीयते, उन्मीलने च वहिः प्रसरति तदुभयदोषपरिहारार्थमर्द्धनिमीलनेन भ्रूमध्ये दृष्टिं निधायेत्यर्थः, उच्छ्वासनिश्वासरूपेण नासिकयोरभ्यन्तरे चरन्तौ प्राणापानावूर्द्ध्वाधोगतिरोधेन समौ कृत्वा कुम्भकं कृत्वेत्यर्थः। यद्वा प्राणोऽयं यथा न वहिर्निर्याति, यथा वाऽपानोऽन्तर्न प्रविशति, किन्तु नासामध्य एव द्वावपि यथा चरतस्तथा मन्दाभ्यामुच्छ्वासनिश्वासाभ्यां समौ कृत्वेति।

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८
भोक्तारं यज्ञतपसां सर्व्वलोकमहेश्वरम् ।
सुहृदं सर्व्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९

इति श्रीमद्भगवद्गीतासूपनिषत्सु कर्म्मसन्न्यासयोगो
नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

यतयिति । अनेनोपायेन यताः संयता इन्द्रियमनोबुद्धयो यस्य, मोक्ष एव परमयनं प्राप्यं यस्य, अतएव विगता इच्छाभयक्रोधा यस्य एवम्भूतो यो मुनिः स सदा जीवन्नपि मुक्त एवेत्यर्थः ॥२७॥२८॥

नन्वेवमिन्द्रियादिसंयममात्रेण कथं मुक्तिः स्यात् न तावन्मात्रेण किन्तु ज्ञानद्वारेणेत्याह भोक्तारमिति । यज्ञानां तपसाञ्चैव मम भक्तैः समर्पितानां यदृच्छया भोक्तारं पालकमिति वा सर्व्वेषां लोकानां महान्तमीश्वरं सर्व्वभूतानां सुहृदं निरपेक्षोपकारिणमन्तर्यामिणं मां ज्ञात्वा मत्प्रसादेन शान्तिं मोक्षमृच्छति प्राप्नोति ॥ २६

विकल्पशङ्कापोहेन येनैवं योगसांख्ययोः ।
समुच्चयः क्रमेणोक्तः सर्व्वज्ञं नौमि तं गुरुम् ॥

इति श्रीधरस्वामिकृतायां टीकायां
पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

# षष्ठोऽध्यायः ।

श्रीभगवानुवाच ।

अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः ।
स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १

यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥ २

---

चित्ते शुद्धेऽपि न ध्यानं विना सन्न्यासमात्रतः ।
मुक्तिः स्यादिति षष्ठेऽस्मिन् ध्यानयोगो वितन्यते ॥

पूर्व्वाध्यायान्ते संक्षेपेणोक्तं योगं प्रपञ्चयितुं षष्ठाध्यायारम्भः, तत्र तावत् "सर्व्वकर्म्माणि मनसा संन्यस्य" इत्यारभ्य सन्न्यासपूर्व्विकाया ज्ञाननिष्ठायास्तात्पर्य्येणाभिधानाद्दुःखरूपत्वाच्च कर्म्मणः सहसा सन्न्यासातिप्रसङ्गं प्राप्तं वारयितुं सन्न्यासादपि श्रेष्ठत्वेन कर्म्मयोगं स्तौति अनाश्रित इति द्वाभ्याम् । कर्म्मफलमनाश्रितोऽनपेक्षमाणः सन्नवश्यकार्य्यतया विहितं कर्म्म यः करोति, स एव सन्न्यासी योगी च, न तु निरग्निरग्निसाध्येष्टाख्यकर्म्मत्यागी, न चाक्रियोऽनग्निसाध्यपूर्त्ताख्यकर्म्मत्यागी च ॥ १ ॥

कुत इत्यपेक्षायां कर्म्मयोगस्यैव सन्न्यासत्वं प्रतिपादयन्नाह यमिति । यं सन्न्यासं प्राहुः प्रकर्षेण श्रेष्ठत्वेनाहुः "सन्न्यास एवात्यरेचयत्" इत्यादि श्रुतय इति, केवलात् फलसन्न्यासाद्धेतोर्योगमेव तं जानीहि । कुत इत्यपेक्षायामितिशब्दोक्तो हेतुर्योगेऽप्यस्तीत्याह न हीति । न सन्न्यस्तः फलसङ्कल्पो येन स कर्म्मनिष्ठो ज्ञाननिष्ठो वा कश्चिदपि योगी न हि भवति, अतः फलसङ्कल्पत्यागादेव चित्तविक्षेपाभावाद् योगी च भवत्येव स इत्यर्थः ॥ २ ॥

आरुरुक्षोर्मुनेर्योगं कर्म्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥ ३
यदा हि नेन्द्रियार्थेषु न कर्म्मस्वनुषज्जते।
सर्व्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते॥ ४
उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥ ५
बन्धुरात्मात्मनस्तस्य येनैवात्मात्मना जितः।

---

तर्हि यावज्जीवं कर्म्मयोग एव प्राप्त इत्याशङ्क्य तस्यावधिमाह आरुरुक्षोरिति। ज्ञानयोगमारोढुं प्राप्तुमिच्छोः पुंसस्तदारोहे कारणं कर्म्मोच्यते चित्तशुद्धिकरत्वात्, ज्ञानयोगमारूढस्य तु तस्यैव ज्ञाननिष्ठस्य शमो विक्षेपककर्म्मोपरमो ज्ञानपरिपाके कारणमुच्यते॥ ३॥

कीदृशोऽयं योगारूढो यस्य शमः कारणमुच्यत इत्यत्राह यदेति। इन्द्रियार्थेष्विन्द्रियभोग्येषु तत्साधनेषु च कर्म्मसु यदा नानुषज्जते आसक्तिं न करोति, तत्र हेतुः,—आसक्तिमूलभूतान् सर्व्वान् भोगविषयान् कर्म्मविषयांश्च सङ्कल्पान् सन्न्यसितुं त्यक्तुं शीलं यस्य सः, तदा योगारूढ उच्यते॥ ४॥

अतो विषयासक्तित्यागे मोक्षं, तदासक्तौ च बन्धं पर्य्यालोच्य रागादिस्वभावं त्यजेदित्याह उद्धरेदिति। आत्मना विवेकयुक्तेनात्मानं संसारादुद्धरेत्, न त्ववसादयेदधो नयेत्, हि यत आत्मैव मनःसङ्गादुपरत आत्मनः स्वस्य बन्धुरुपकारकः, रिपुरपकारकः॥ ५॥

कथम्भूतस्यात्मैव बन्धुः, कथम्भूतस्य चात्मैव रिपुरित्यपेक्षायामाह बन्धुरिति। येनात्मनैवात्मा कार्य्यकारणसंघातरूपो जितो

अनात्मनस्तु शत्रुत्वे वर्त्ततात्मैव शत्रुवत् ॥ ६

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥ ७

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८

सुहृन्मित्रार्य्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९

---

वशीकृतस्तस्य तथाभूतस्यात्मन आत्मैव बन्धुः, अनात्मनोऽजितात्मनस्तु आत्मैवात्मनः शत्रुत्वे शत्रुवदपकारित्वे वर्त्तेत ॥ ६ ॥

जितात्मनः स्वस्मिन् बन्धुत्वं स्फुटयति जितात्मन इति। जित आत्मा येन तस्य प्रशान्तस्य रागादिरहितस्यैव परं केवलमात्मा शीतोष्णादिषु सत्स्वपि समाहित आत्मनिष्ठो भवति, नान्यस्य, यद्वा तस्य हृदि परमात्मा समाहितः स्थितो भवति ॥ ७ ॥

योगारूढस्य लक्षणं श्रेष्ठञ्चोक्तमुपसंहरति ज्ञानेति। ज्ञानमौपदेशिकं, विज्ञानमपरोक्षानुभवस्ताभ्यां तृप्तो निराकाङ्क्ष आत्मा चित्तं यस्य, अतः कूटस्थो निर्व्विकारः, अतएव विजितानीन्द्रियाणि येन, अतएव समानि लोष्टादीनि यस्य म्टत्खण्डपाषाणसुवर्णेषु हेयोपादेयबुद्धिशून्यः स युक्तो योगारूढ इत्युच्यते ॥ ८ ॥

सुहृन्मित्रादिषु समबुद्धियुक्तस्तु ततोऽपि श्रेष्ठ इत्याह सुहृदिति। सुहृत् स्वभावेनैव हिताशंसी, मित्रं स्नेहवशेनोपकारकः, अरिर्घातुकः, उदासीनो विवदमानयोरुभयोरप्युपेक्षकः, मध्यस्थो विवदमानयोरुभयोरपि हिताशंसी, द्वेष्यो द्वेषविषयः, बन्धुः सम्बन्धी, साधवः सदाचाराः, पापा दुराचाराः, एतेषु समा रागद्वेषशून्या बुद्धिर्यस्य स तु विशिष्टः ॥ ९ ॥

योगी युञ्जीत सततमात्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः॥ १०
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
न त्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम्॥ ११
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये॥ १२
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्॥ १३

---

एवं योगारूढस्य लक्षणमुक्त्वेदानीं तस्य साङ्गं योगं विधत्ते योगीत्यादिना स योगी परमो मत इत्यन्तेन ग्रन्थेन। योगी योगारूढ़ आत्मानं मनो युञ्जीत समाहितं कुर्य्यात्, सततं निरन्तरं रहसि एकान्ते स्थितः सन्, एकाकी सङ्गशून्यः, यतं संयतं चित्तमात्मा देहश्च यस्य, निराशीर्निराकाङ्क्षः, अपरिग्रहः परिग्रहशून्यश्च॥ १०

आसननियमं दर्शयन्नाह शुचाविति द्वाभ्याम्। शुद्धे स्थाने आत्मनः स्वस्यासनं स्थापयित्वा, कीदृशं स्थिरमचञ्चलं नात्युच्छ्रितं न चातिनीचं, चेलं वस्त्रम् अजिनं व्याघ्रादिचर्म्म, चेलाजिने कुशेभ्य उत्तरे यस्य, कुशानामुपरि चर्म्म, तदुपरि वस्त्रमास्तीर्य्येत्यर्थः, तत्र तस्मिन्नासने उपविश्य एकाग्रं विक्षेपरहितं मनः कृत्वा योगं युञ्ज्यात्-दभ्यस्येत्, यता संयता चित्तस्येन्द्रियाणाञ्च क्रिया यस्य, आत्मनो मनसो विशुद्धय उपशान्तये॥ ११॥ १२॥

चित्तैकाग्र्योपयोगिनीं देहादिधारणां दर्शयन्नाह सममिति द्वाभ्याम्। काय इति देहस्य मध्यभागो विवक्षितः, कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं मूलाधारादारभ्य मूर्द्धाग्रपर्य्यन्तं सममवक्रं निश्चलं धारयन् स्थिरो दृढ़प्रयत्नो भूत्वेत्यर्थः, स्वीयं नासिकाग्रं

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः॥ १४
युञ्जन्नेवं सदात्मानं योगी नियतमानसः।
शान्तिं निर्व्वाणपरमां मत्संस्थामधिगच्छति॥ १५
नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्ज्जुन॥ १६
युक्ताहारविहारस्य युक्तचेष्टस्य कर्म्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥ १७

---

संप्रेक्ष्य चार्द्धनिमीलितनेत्र इत्यर्थः, इतस्ततो दिशश्चानवलोकयन्नासीतेत्युत्तरेणान्वयः। प्रशान्तेति। प्रशान्त आत्मा चित्तं यस्य, विगता भीर्भयं यस्य, ब्रह्मचारिव्रते ब्रह्मचर्य्ये स्थितः सन् मनः संयम्य प्रत्याहृत्य मय्येव चित्तं यस्य, अहमेव परः पुरुषार्थो यस्य स मत्पर एवं युक्तो भूत्वा तिष्ठेत्॥ १३॥ १४॥

योगाभ्यासफलमाह युञ्जन्नेवमिति। एवमुक्तप्रकारेण सदा आत्मानं मनो युञ्जन् समाहितं कुर्व्वन् नियतं निरुद्धं मानसं चित्तं यस्य स शान्तिं संसारोपरमं प्राप्नोति। कथम्भूताम्—निर्व्वाणं परं प्राप्यं यस्यां तां मत्संस्थां मद्रूपेणावस्थितिम्॥ १५॥

योगाभ्यासनिष्ठस्याहारादिनियममाह नात्यश्नत इति द्वाभ्याम्। अत्यन्तमधिकं भुञ्जानस्य एकान्तमत्यन्तमभुञ्जानस्यापि योगः समाधिर्न भवति, तथातिनिद्राशीलस्यातिजाग्रतश्च योगो नैवास्ति॥१६॥

तर्हि कथम्भूतस्य योगो भवतीत्यत आह युक्ताहारेति। युक्तो नियत आहारो विहारश्च गतिर्यस्य, कर्म्मसु कार्य्येषु युक्ता नियता चेष्टा यस्य, युक्तौ नियतौ स्वप्नावबोधौ निद्राजागरौ यस्य, तस्य दुःखनिवर्त्तको योगो भवति सिध्यति॥ १७॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते।
निस्पृहः सर्व्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९

यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २०

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१

---

कदा निष्पन्नयोगः पुरुषो भवतीत्यपेक्षायामाह यदेति। विनियतं विशेषेण निरुद्धं सच्चित्तमात्मन्येव यदा निश्चलं तिष्ठति, तदा प्राप्तयोग इत्युच्यते ॥ १८ ॥

आत्मैकाकारतयावस्थितस्य चित्तस्योपमानमाह यथेति। वातशून्यदेशे स्थितो दीपो यथा नेङ्गते न चलति, सा उपमा दृष्टान्तः। कस्य—आत्मविषयं योगं युञ्जतोऽभ्यस्यतो योगिनो यतं नियतं चित्तं यस्य निष्कम्पतया प्रकाशतया चाचञ्चलं तच्चित्तं, तद्वत् तिष्ठतीत्यर्थः ॥ १९ ॥

"यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव" इत्यादौ कर्म्मैव योगशब्देनोक्तं, "नात्यश्नतस्तु योगोऽस्ति" इत्यादौ तु समाधिर्योगशब्देनोक्तस्तत्र मुख्यो योगः क इत्यपेक्षायां समाधिमेव स्वरूपतः फलतश्च लक्षयन् स एव मुख्यो योग इत्याह यत्रेति सार्द्धैस्त्रिभिः। यत्र यस्मिन्नवस्थाविशेषे योगाभ्यासेन निरुद्धं चित्तमुपरतं भवतीति योगस्य स्वरूपलक्षणमुक्तम्। तथा च पातञ्जलसूत्रं,—"योगश्चित्तवृत्तिनिरोधः" इति। इष्टप्राप्तिलक्षणेन फलेन तमेव लक्षयति—यत्र च यस्मिन्नवस्थाविशेषे आत्मना शुद्धेन मनसा आत्मानमेव पश्यति, न तु देहादि,

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्।
स निश्चयेन योक्तव्यो योगोऽनिर्व्विण्णचेतसा ॥ २३

---

पश्यंश्चात्मन्येव तुष्यति, न तु विषयेषु। यत्रेत्यादीनां यच्छब्दानां तं योगसंज्ञितं विद्यादिति चतुर्थेनान्वयः। आत्मन्येव तोषे हेतुमाह सुखमिति। यत्र यस्मिन्नवस्थाविशेषे यत्तत् किमपि निरतिशयमात्यन्तिकं नित्यं सुखं वेत्ति। ननु तदा विषयेन्द्रियसम्बन्धाभावात् कुतः सुखं स्यात् तत्राह अतीन्द्रियं विषयेन्द्रियसम्बन्धातीतं केवलं बुद्ध्यैवात्माकारया ग्राह्यम्, अतएव च यत्र स्थितः संस्तत्त्वत आत्मस्वरूपान्नैव चलति। अचलत्वमेवोपपादयति यमिति। यतो यमात्मस्वरूपं लब्ध्वा ततोऽधिकं लाभं न मन्यते तस्यैव निरतिशयसुखत्वात्, यस्मिंश्च स्थितो महतापि शीतोष्णादिदुःखेन न विचाल्यते नाभिभूयते, एतेनानिष्टनिवृत्तिफलेनापि योगस्य लक्षणमुक्तं द्रष्टव्यम्। तमिति। य एवम्भूतोऽवस्थाविशेषस्तं दुःखसंयोगवियोगं योगसंज्ञितं विद्यात्, दुःखशब्देन दुःखमिश्रितं वैषयिकं सुखमपि गृह्यते, दुःखस्य संयोगेन संस्पर्शमात्रेणापि वियोगो यस्मिंस्तमवस्थाविशेषं योगसंज्ञितं योगशब्दवाच्यं जानीयात्, परमात्मनि चेतसस्य योजनं योगः, यद्वा दुःखस्य संयोगेन वियोग एव शूरे कातरशब्दवद्विरुद्धलक्षणया योग उच्यते, कर्म्मणि तु योगशब्दस्तदुपायत्वादौपचारिक इति भावः। यस्मादेवं महाफलो योगस्तस्मात् स एव यत्नतोऽभ्यसनीय इत्याह स इति सार्द्धेन। स योगो निश्चयेन शास्त्राचार्य्योपदेशजनितेन योक्तव्योऽभ्यसनीयः, यद्यपि शीघ्रं न सिध्यति, तथाप्यनिर्व्विण्णेन निर्व्वेदरहितेन चेतसा योक्तव्यः। दुःखबुद्ध्या

सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्व्वानशेषतः।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः॥ २४
शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्॥ २५
यतो यतो निश्चलति मनश्चञ्चलमस्थिरम्।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्॥ २६
प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्।

---

प्रयत्नशैथिल्यं निर्व्वेदः। किञ्च सङ्कल्पेति। सङ्कल्पात् प्रभवो येषां तान् योगप्रतिकूलान् सर्व्वान् कामानशेषतः सवासनांस्त्यक्त्वा मनसैव विषयदोषदर्शिना सर्व्वतः प्रसरन्तमिन्द्रियसमूहं विशेषेण नियम्य योगो योक्तव्य इति पूर्व्वेणान्वयः॥ २०—२४॥

यदि तु प्राक्तनकर्म्मसंस्कारेण मनो विचलेत् तर्हि धारणया स्थिरीकुर्य्यादित्याह शनैरिति। धृतिर्धारणा तया गृहीतया वशीकृतया बुद्ध्या आत्मसंस्थमात्मन्येव सम्यक् स्थितं निश्चलं मनः कृत्वा उपरमेत्, तत्तु शनैः शनैरभ्यासक्रमेण, न तु सहसा। उपरमस्वरूपमाह,—न किञ्चिदपि चिन्तयेत्,—निश्चले मनसि स्वयमेव प्रकाशमानपरमानन्दनिर्वृतो भूत्वा आत्मध्यानादपि न निवर्त्तेत इत्यर्थः॥ २५॥

एवमपि रजोगुणवशाद्यदि मनः प्रचलेत् तर्हि पुनः प्रत्याहारेण वशीकुर्य्यादित्याह यतो यत इति। स्वभावतश्चञ्चलं धार्य्यमाणमप्यस्थिरं मनो यं यं विषयं प्रति निर्गच्छति, ततस्ततः प्रत्याहृत्य आत्मन्येव स्थिरं कुर्य्यात्॥ २६॥

एवं प्रत्याहारादिभिः पुनःपुनर्मनो वशीकुर्व्वन्तं रजोगुणक्षये

उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७
युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८
सर्व्वभूतस्थमात्मानं सर्व्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्व्वत्र समदर्शनः ॥ २९
यो मां पश्यति सर्व्वत्र सर्व्वञ्च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३०

---

सति योगसुखं प्राप्नोतीत्याह प्रशान्तेति । एवमुक्तप्रकारेण शान्तं रजो यस्य तम्, अतएव प्रशान्तं मनो यस्य तमेनं निष्कल्मषं ब्रह्मत्व प्राप्तं योगिनमुत्तमं सुखं समाधिसुखं स्वयमेवोपैति प्राप्नोति ॥ २७ ॥

ततश्च कृतार्थो भवतीत्याह युञ्जन्निति । एवमनेन प्रकारेण सर्व्वदा आत्मानं मनो युञ्जन् वशीकुर्व्वन् विशेषेण सर्व्वात्मना गतं कल्मषं यस्य स योगी सुखेनानायासेन ब्रह्मणः संस्पर्शोऽविद्या-निवर्त्तकः साक्षात्कारस्तदेवात्यन्तं सर्व्वोत्तमं सुखमश्नुते जीवन्मुक्तो भवतीत्यर्थः ॥ २८ ॥

ब्रह्मसाक्षात्कारमेव दर्शयति सर्व्वभूतस्थमिति । योगेनाभ्यस्य-मानेन युक्तात्मा समाहितचित्तः, सर्व्वत्र समं ब्रह्मैव पश्यतीति, तथा स्वमात्मानमविद्याकृतदेहादिपरिच्छेदशून्यं सर्व्वभूतेषु ब्रह्मादि-स्थावरान्तेष्ववस्थितं पश्यति, तानि च आत्मन्यभेदेन पश्यति ॥ २९ ॥

एवम्भूतात्मज्ञाने च सर्व्वभूतात्मतया मदुपासनं मुख्यं कारण-मित्याह यो मामिति । मां परमेश्वरं सर्व्वत्र भूतमात्रे यः पश्यति, सर्व्वञ्च प्राणिमात्रं मयि यः पश्यति, तस्याहं न प्रणश्यामि अदृश्यो न भवामि, स च ममादृश्यो न भवति प्रत्यक्षो भूत्वा कृपादृष्ट्या तं विलोक्यानुगृह्णामीत्यर्थः ॥ ३० ॥

सर्व्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्व्वथा वर्त्तमानोऽपि स योगी मयि वर्त्तते ॥ ३१

आत्मौपम्येन सर्व्वत्र समं पश्यति योऽर्ज्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२

अर्ज्जुन उवाच।

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥ ३३
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।

---

न चैवम्भूतो विधिकिङ्करः स्यादित्याह सर्व्वभूतस्थितमिति। सर्व्वभूतेषु स्थितं मामभेदमास्थित आश्रितो यो भजति, स योगी ज्ञानी सन् सर्व्वथा कर्म्मपरित्यागेनापि वर्त्तमानो मय्येव वर्त्तते मुच्यते न तु भ्रश्यतीत्यर्थः ॥ ३१ ॥

एवञ्च मां भजतां योगिनां मध्ये सर्व्वभूतानुकम्पी श्रेष्ठ इत्याह आत्मौपम्येनेति। स्वस्यादृष्टेन यथा मम सुखं प्रियं दुःखञ्चाप्रियं तथान्येषामपीति सर्व्वत्र समं पश्यन् सुखमेव सर्व्वेषां यो वाञ्छति, न तु कस्यापि दुःखं, स योगी श्रेष्ठो ममाभिमत इत्यर्थः ॥ ३२ ॥

उक्तलक्षणस्य योगस्यासम्भवं मन्वानोऽर्ज्जुन उवाच योऽयमिति। साम्येन मनसो लयविक्षेपशून्यतया केवलात्माकारावस्थानेन योऽयं योगस्त्वया प्रोक्तः, एतस्य योगस्य स्थिरां दीर्घकालां स्थितिं न पश्यामि मनसश्चञ्चलत्वात् ॥ ३३ ॥

एतत् स्फुटयति चञ्चलमिति। चञ्चलं स्वभावेनैव चपलं, किञ्च प्रमाथि प्रमथनशीलं देहेन्द्रियक्षोभकरमित्यर्थः, किञ्च बलवद्विचारेणापि जेतुमशक्यं, किञ्च दृढं विषयवासनानुबन्धितया दुर्भेद्यम्,

तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४
श्रीभगवानुवाच ।
असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६
अर्ज्जुन उवाच ।
अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।

---

अतो यथाकाशे दोधूयमानस्य वायोः कुम्भादिषु निरोधनमशक्यं, तथाहं तस्य मनसो निग्रहं निरोधं सुदुष्करं सर्व्वथा कर्त्तुमशक्यं मन्ये ॥ ३४ ॥

तदुक्तं चञ्चलादिकमङ्गीकृत्यैव मनोनिग्रोहपायं श्रीभगवानुवाच असंशयमिति । चञ्चलत्वादिना मनो निरोद्धुमशक्यमिति यद्वदसि, एतन्निःसंशयमेव । तथापि तु अभ्यासेन परमात्माकारया वृत्त्या विषयवैतृष्ण्येन च गृह्यते, अभ्यासेन लयप्रतिबन्धाद्वैराग्येण च विक्षेपप्रतिबन्धादुपरतवृत्तिकं सत् परमात्माकारेण परिणतं तिष्ठतीत्यर्थः । तदुक्तं योगशास्त्रे,—"मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः । या संप्रज्ञातनामासौ समाधिरभिधीयते" इति ॥ ३५ ॥

एतावांस्त्विह निश्चय इत्याह असंयतेति । उक्तप्रकारेणाभ्यासवैराग्याभ्यामसंयत आत्मा चित्तं यस्य तेन योगो दुष्प्रापः प्राप्तुमशक्यः, अभ्यासवैराग्याभ्यां वशी वशवर्त्ती आत्मा चित्तं तस्य तेन पुरुषेण पुनस्तानैवोपायेन प्रयत्नं कुर्व्वता योगः प्राप्तुं शक्यः ॥ ३६ ॥

अभ्यासवैराग्याभावेन कथञ्चिदप्राप्तसम्यग्ज्ञानः किं फलं प्राप्नोतीत्यर्ज्जुन उवाच अयतिरिति । प्रथमं श्रद्धयोपेत एव योगे

अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढ़ो ब्रह्मणः पथि ॥ ३८

एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९

श्रीभगवानुवाच ।

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।

---

प्रवृत्तः, न तु मिथ्याचारतया, ततः परन्त्वयतिः सम्यक् न यतते शिथिलाभ्यास इत्यर्थः, तथा योगाच्चलितं मानसं विषयप्रवणं चित्तं यस्य मन्दवैराग्य इत्यर्थः, एवमभ्यासवैराग्यशैथिल्याद्योगस्य संसिद्धिं फलं ज्ञानमप्राप्य कां गतिं प्राप्नोति ॥ ३७ ॥

प्रश्नाभिप्रायं विवृणोति कच्चिदिति। कर्म्मणामीश्वरेऽर्पितत्वादननुष्ठानाच्च तावत् कर्म्मफलं स्वर्गादिकं न प्राप्नोति, योगानिष्पत्तेश्च मोक्षं न प्राप्नोति एवमुभयस्माद्भ्रष्टः अप्रतिष्ठो निराश्रयः अतएव ब्रह्मप्राप्त्युपाये पथि मार्गे विमूढ़ः सन् कच्चित् किं न नश्यति किंवा नश्यतीत्यर्थः। नाशे दृष्टान्तः,—यथा छिन्नमभ्रं पूर्व्वस्मादभ्रादिश्लिष्टमभ्रान्तरमप्राप्तं सत् मध्य एव विलीयते, तद्वदित्यर्थः ॥ ३८ ॥

त्वयैव सर्व्वज्ञेनायं मम सन्देहो निरसनीयः त्वत्तोऽन्यस्तु एतत्सन्देहनिवर्त्तको नास्तीत्याह एतदिति। एतत् छेत्ता निवर्त्तकः। स्पष्टमन्यत् ॥ ३९ ॥

अत्रोत्तरं श्रीभगवानुवाच पार्थेति सार्द्धैश्चतुर्भिः। इह लोके नाशः उभयभ्रंशात् पातित्यम् अमुत्र परलोके नाशो नरकप्राप्तिस्त-

नहि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति ॥ ४०
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१
अथवा योगिनामेव कुले भवति धीमताम्।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२
तत्र तं बुद्धिसंयोगं लभते पौर्व्वदेहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३

---

दुर्भयं तस्य नास्त्येव, यतः कल्याणकृत् शुभकारी कश्चिदपि दुर्गतिं न गच्छति। अयञ्च शुभकारी श्रद्धया योगे प्रवृत्तत्वात्। तातेति लोकरीत्या उपलालयन् सम्बोधयति ॥ ४० ॥

तर्हि किमसौ प्राप्नोतीत्यपेक्षायामाह प्राप्येति। पुण्यकारिणामश्वमेधादियाजिनां लोकान् प्राप्य तत्र शाश्वतीः समा बहून् संवत्सरानुषित्वा वासमुखमनुभूय शुचीनां सदाचाराणां श्रीमतां धनिनां गेहे स योगभ्रष्टो जन्म प्राप्नोति ॥ ४१ ॥

अल्पकालाभ्यस्तयोगभ्रंशे गतिविशेषमुक्त्वा चिराभ्यस्तयोगभ्रंशे पक्षान्तरमाह अथवेति। योगनिष्ठानां धीमतां ज्ञानिनामेव कुले जायते, न तु पूर्व्वोक्तानामनारूढ़योगानां कुले। एतज्जन्म स्तौति ईदृशं जन्मेति। एतद्धि लोके दुर्लभतरं मोक्षहेतुत्वात् ॥ ४२ ॥

ततः किमत आह तत्रेति सार्द्धेन। स तत्र द्विप्रकारेऽपि जन्मनि पूर्व्वदेहभवं पौर्व्वदेहिकं तमेव ब्रह्मविषयया बुद्ध्या संयोगं लभते, ततश्च भूयोऽधिकं संसिद्धौ मोक्षे प्रयत्नं करोति ॥ ४३ ॥

पूर्व्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते ॥ ४४
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५
तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्म्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्ज्जुन ॥ ४६

---

तत्र हेतुः पूर्व्वेति। तेनैव पूर्व्वदेहकृताभ्यासेनावशोऽपि कुतश्चिदन्तरायादनिच्छन्नपि स ह्रियते विषयेभ्यः परावृत्य ब्रह्मनिष्ठः क्रियते। तदेवं पूर्व्वाभ्यासवशेन प्रयत्नं कुर्व्वन् शनैर्मुच्यत इतीममर्थं कैमुत्यन्यायेन स्पष्टयति जिज्ञासुरिति सार्द्धेन। योगस्य स्वरूपं जिज्ञासुरेव केवलं, न तु प्राप्तयोगः, एवम्भूतो योगे प्रविष्टमात्रोऽपि पापवशाद्योगभ्रष्टोऽपि शब्दब्रह्म वेदमतिवर्त्तते वेदोक्तकर्म्मफलान्यतिक्रामति तेभ्योऽधिकं फलं प्राप्य मुच्यत इत्यर्थः ॥ ४४ ॥

यदेवं मन्दप्रयत्नोऽपि योगी परां गतिं याति, तदा यस्तु योगी प्रयत्नादुत्तरोत्तरमधिकं योगे यतमानो यत्नं कुर्व्वन् योगेनैव संशुद्धकिल्बिषो विधूतपापः सोऽनेकेषु जन्मसूपचितेन योगेन संसिद्धः सम्यग्ज्ञानी भूत्वा ततः श्रेष्ठां गतिं यातीति किं वक्तव्यमित्यर्थः ॥ ४५ ॥

यस्मादेवं, तस्मात् तपस्विभ्य इति। कृच्छ्रचान्द्रायणादितपोनिष्ठेभ्योऽपि ज्ञानिभ्यः शास्त्रविज्ञानवद्भ्योऽपि, कर्म्मिभ्य इष्टापूर्त्तादिकर्म्मकारिभ्योऽपि योगी श्रेष्ठो ममाभिमतः, तस्मात्त्वं योगी भव ॥ ४६ ॥

योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥ ४७

इति श्रीमद्भगवद्गीतासूपनिषत्सु अभ्यासयोगो
नाम षष्ठोऽध्यायः॥ ६॥

---

योगिनामपि यमनियमादिपराणां मध्ये मद्भक्तः श्रेष्ठ इत्याह योगिनामपीति। मद्गतेन मय्यासक्तेनान्तरात्मना मनसा यो मां परमेश्वरं श्रद्धायुक्तः सन् भजते, स योगयुक्तेभ्यः श्रेष्ठो मम सम्मतः, अतो मद्भक्तो भवेति भावः॥ ४७॥

आत्मयोगमवोचद्यो भक्तियोगशिरोमणिम्।
तं वन्दे परमानन्दं माधवं भक्तसेवधिम्॥

इति श्रीधरस्वामिकृतायां टीकायां
षष्ठोऽध्यायः समाप्तः॥ ६॥

# सप्तमोऽध्यायः ।

श्रीभगवानुवाच ।

मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १
ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २
मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये ।

---

विज्ञेयमात्मनस्तत्त्वं संयोगं समुदाहृतम् ।
भजनीयमथेदानीमैश्वरं रूपमीर्य्यते ॥

पूर्व्वाध्यायान्ते मद्गतेनान्तरात्मना यो मां भजते, स मे युक्ततमो मत इत्युक्तं, तत्र कीदृशस्त्वं यस्य भक्तिः कर्त्तव्येत्यपेक्षायां स्वस्वरूपं निरूपयिष्यन् श्रीभगवानुवाच मयीति। मयि परमेश्वरे आसक्तमभिनिविष्टं मनो यस्य सः, मदाश्रयोऽहमेवाश्रयो यस्य अनन्यशरणः सन् योगं युञ्जन्नभ्यस्यन् असंशयं यथा भवत्येवं मां समग्रं विभूतिबलैश्वर्य्यादिसहितं यथा ज्ञास्यसि तदिदं मया वक्ष्यमाणं शृणु ॥ १ ॥

वक्ष्यमाणं स्तौति ज्ञानमिति। ज्ञानं शास्त्रीयं विज्ञानमनुभवस्तत्सहितमिदं मद्विषयमशेषतः साकल्येन वक्ष्यामि, यज्ज्ञात्वा इह श्रेयोमार्गे वर्त्तमानस्य पुनरन्यज्ज्ञातव्यमवशिष्टं न भवति तेनैव कृतार्थो भवतीत्यर्थः ॥ २ ॥

मद्भक्तिं विना तु मज्ज्ञानं दुर्लभमित्याह मनुष्याणामिति। असंख्यातानां जीवानां मध्ये मनुष्यव्यतिरिक्तानां श्रेयसि प्रवृत्ति-

यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।

---

रेव नास्ति, मनुष्याणान्तु सहस्रेषु मध्ये कश्चिदेव पुण्यवशात् सिद्धये आत्मज्ञानाय प्रयतते, प्रयत्नं कुर्व्वतामपि सहस्रेषु प्राक्तनपुण्यवशा-दात्मानं वेत्ति, तादृशानाञ्चात्मज्ञानां सहस्रेषु कश्चिदेव मां परमात्मानं मत्प्रसादेन तत्त्वतो वेत्ति, तदेवमतिदुर्लभत्वात्मतत्त्वं तुभ्यमहं वक्ष्यामीत्यर्थः ॥ ३ ॥

एवं श्रोतारमभिमुखीकृत्येदानीं प्रकृतिद्वारा सृष्ट्यादिकर्तृत्वे-नेश्वरतत्त्वं प्रतिज्ञातं निरूपयिष्यन् परापरभेदेन प्रकृतिद्वयमाह भूमिरिति द्वाभ्याम् । भूम्यादीनि पञ्च भूतसूक्ष्माणि, मनःशब्देन तत्कारणभूतोऽहङ्कारः, बुद्धिशब्देन तत्कारणं महत्तत्त्वम्, अहङ्कार-शब्देन तत्कारणमविद्या इत्येवमष्टधा भिन्ना, यद्वा भूम्यादिशब्दैः पञ्च महाभूतानि सूक्ष्मैः सहैकीकृत्य गृह्यन्ते, अहङ्कारशब्देनैवा-हङ्कारस्तेनैव तत्कार्य्याणीन्द्रियाण्यपि गृह्यन्ते, बुद्धिरिति महत्तत्त्वं, मनःशब्देन तु मनसैवोन्नेयमव्यक्तस्वरूपं प्रधानमित्यनेन प्रकारेण मे प्रकृतिर्मायाख्या शक्तिरष्टधा भिन्ना विभागं प्राप्ता । चतुर्व्विंशति-भेदभिन्नाप्यष्टस्वेवान्तर्भावविवक्षयाष्टधा भिन्नेत्युक्तं, तथा च क्षेत्रा-ध्याये इमामेव प्रकृतिं चतुर्व्विंशतितत्त्वात्मना प्रपञ्चयिष्यति,— "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः" इति ॥ ४ ॥

अपरामिमां प्रकृतिमुपसंहरन् परां प्रकृतिमाह अपरेयमिति । अष्टधा या प्रकृतिरुक्ता इयमपरा निकृष्टा जड़त्वात् परार्थत्वाच्च,

जीवभूतां महाबाहो ययेदं धार्य्यते जगत्॥ ५

एतद्योनीनि भूतानि सर्व्वाणीत्युपधारय

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥ ६

मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय।

मयि सर्व्वमिदं प्रोतं सूत्रे मणिगणा इव॥ ७

रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्य्ययोः।

---

इतः सकाशात् परां प्रकृष्टामन्यां जीवभूतां जीवस्वरूपां मे प्रकृतिं जानीहि। परत्वे हेतुः,—यया चेतनया क्षेत्रज्ञस्वरूपया स्वकर्म्मद्वारेणेदं जगद्धार्य्यते॥ ५॥

अनयोः प्रकृतित्वं दर्शयन् स्वस्य तत्द्वारा सृष्ट्यादिकारणत्वमाह एतदिति। एते क्षेत्रक्षेत्रज्ञस्वरूपे प्रकृती योनी कारणभूते येषां तानि एतद्योनीनि स्थावरजङ्गमात्मकानि सर्व्वाणि भूतानीति उपधारय बुध्यस्व, तत्र जड़ा प्रकृतिर्देहरूपेण परिणमते, चेतना तु मदंशभूता भोक्तृत्वेन देहेषु प्रविश्य स्वकर्म्मणा तानि धारयति, ते च मदीये प्रकृती मत्तः सम्भूते, अतोऽहमेव कृत्स्नस्य सप्रकृतिकस्य जगतः प्रभवः प्रकर्षेण भवत्यस्मादिति प्रभवः परमकारणमहमित्यर्थः, तथा प्रलीयतेऽनेनेति प्रलयः संहर्त्ताप्यहमेवेत्यर्थः॥ ६॥

यस्मादेवं तस्मान्मत्त इति। मत्तः सकाशात् परतरं श्रेष्ठं जगतः सृष्टिसंहारयोः स्वतन्त्रं कारणं किञ्चिदपि नास्ति। स्थितिहेतुरप्यहमेवेत्याह मयीति। मयि सर्व्वमिदं जगत् प्रोतं ग्रथितमाश्रितमित्यर्थः, दृष्टान्तः स्पष्टः॥ ७॥

जगत्स्थितिहेतुत्वमेव प्रपञ्चयति रसोऽहमिति पञ्चभिः। अप्सु रसोऽहं रसतन्मात्रस्वरूपया विभूत्या तदाश्रयत्वेनाप्सु स्थितोऽहमित्यर्थः, तथा शशिसूर्य्ययोः प्रभास्मि चन्द्रे सूर्य्ये च प्रकाश-

प्रणवः सर्व्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८
पुण्यो गन्धः पृथिव्याञ्च तेजश्चास्मि विभावसौ।
जीवनं सर्व्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९
वीजं मां सर्व्वभूतानां विद्धि पार्थ सनातनम्।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १०
वलं वलवताञ्चाहं कामरागविवर्ज्जितम्।

---

रूपया विभूत्या तदाश्रयत्वेन स्थितोऽहमित्यर्थः, अन्यत्राप्येवं द्रष्टव्यं, सर्व्वेषु वेदेषु वैखरीरूपेषु तन्मूलभूत ओङ्कारोऽस्मि, खे आकाशे शब्दः शब्दतन्मात्ररूपोऽस्मि, नृषु पुरुषेषु पौरुषमुद्यमोऽस्मि उद्यमे हि पुरुषास्तिष्ठन्ति ॥ ८ ॥

किञ्च पुण्य इति। पुण्योऽविकृतो गन्धो गन्धतन्मात्रं पृथिव्याश्रयभूतोऽहमित्यर्थः, यद्वा विभूतिरूपेणाश्रयत्वस्य विवक्षितत्वात् सुरभिगन्धस्यैवोत्कृष्टतया विभूतित्वात् पुण्यो गन्ध इत्युक्तं, तथा विभावसौ अग्नौ यत् तेजो दुःसहा दीप्तिस्तदहं, सर्व्वभूतेषु जीवनं प्राणधारणमायुरहमित्यर्थः, तपस्विषु वानप्रस्थादिषु द्वन्दसहनरूपं तपोऽस्मि ॥ ९ ॥

किञ्च वीजमिति। सर्व्वेषां चराचराणां भूतानां वीजं सजातीयकार्य्योत्पादनसामर्थ्यं सनातनं नित्यम् उत्तरोत्तरसर्व्वकार्य्येष्वनुस्यूतं तदेव वीजं मद्विभूतिं विद्धि, नतु प्रकृतिव्यक्तिरिव नश्यत्। तथा बुद्धिमतां बुद्धिः प्रज्ञाहमस्मि, तेजस्विनां प्रगल्भानां तेजः प्रागल्भ्यमहम् ॥ १० ॥

किञ्च वलमिति। कामोऽप्राप्तेषु वस्तुष्वभिलाषो राजसः, रागः पुनरभिलषितेऽर्थे प्राप्तेऽपि पुनरधिकेऽर्थे चित्तरञ्जनात्मकस्तृष्णापर्य्यायः कामरागाभ्यां विवर्ज्जितं वलवतां वलमस्मि सात्त्विकं स्वधर्म्मानुष्ठान-

धर्म्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११
ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥ १२
त्रिभिर्गुणमयैर्भावैरेभिः सर्व्वमिदं जगत्।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३
दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४

---

सामर्थ्यमहमित्यर्थः, धर्म्मेणाविरुद्धः स्वदारेषु पुत्रोत्पादनमात्रोपयोगी कामोऽहमिति ॥ ११ ॥

किञ्च ये चैवेति। ये चान्येऽपि सात्त्विका भावाः शमदमादयः, राजसाश्च हर्षदर्पादयः, तामसाश्च ये शोकमोहादयः प्राणिनां स्वकर्म्मवशाज्जायन्ते, तान् सर्व्वान् मत्त एव जातान् विद्धि मदीय प्रकृतिगुणत्रयकार्य्यत्वात्, एवमपि तेष्वहं न वर्त्ते जीववत् तदधीनोऽहं न भवामीत्यर्थः, ते तु मदधीनाः सन्तो मयि वर्त्तन्त इत्यर्थः ॥ १२ ॥

एवम्भूतमीश्वरं त्वामयं जनः किमिति न जानातीत्यत आह त्रिभिरिति। त्रिभिस्त्रिविधैरेभिः पूर्व्वोक्तैर्गुणमयैः कामलोभादिभिर्गुणविकारभावैः स्वभावैर्मोहितमिदं जगत् अतो मां नाभिजानाति, कथम्भूतम्? एभ्यो भावेभ्यः परं एभिरस्पृष्टम् एतेषां नियन्तारम्, अतएवाव्ययं निर्व्विकारमित्यर्थः ॥ १३ ॥

के तर्हि त्वां जानन्तीत्यत आह दैवीति। दैवी अलौकिकी अत्यद्भुतेत्यर्थः, गुणमयी सत्त्वादिगुणविकारात्मिका मम परमेश्वरस्य शक्तिर्माया दुरत्यया दुस्तरा हि प्रसिद्धमेतत्, तथापि मामेवेत्येव-

न मां दुष्कृतिनो मूढ़ाः प्रपद्यन्ते नराधमाः।
माययापहृतज्ञाना आसुरं भावमाश्रिताः॥ १५
चतुर्व्विधा मां भजन्ते जनाः सुकृतिनोऽर्ज्जुन।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥ १६
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥ १७

---

कारेणाव्यभिचारिण्या भक्त्या ये प्रपद्यन्ते भजन्ति, मायामेतां सुदुस्तरामपि ते तरन्ति ततो मां जानन्तीति भावः॥ १४॥

किमिति तर्हि सर्व्वे त्वामेव न भजन्तीत्यत आह न मामिति। नरेषु येऽधमास्ते मां न प्रपद्यन्ते न भजन्ति। अधमत्वे हेतुः,—मूढ़ा विवेकशून्याः। तत् कुतः? दुष्कृतिनः पापशीलाः, अतो मायापहृतं निरस्तं शास्त्राचार्य्योपदेशाभ्यां जातमपि ज्ञानं येषां ते तथा, अतएव "दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च" इत्यादिना वक्ष्यमाणमासुरं भावं स्वभावं प्राप्ताः सन्तो न मां भजन्ति॥ १५॥

सुकृतिनस्तु मां भजन्त्येव, ते च सुकृततारतम्येन चतुर्व्विधा इत्याह चतुर्व्विधा इति। पूर्व्वजन्मसु ये कृतपुण्यास्ते मां भजन्ति, ते चतुर्व्विधाः, आर्त्तो रोगाद्यभिभूतः, स यदि पूर्व्वं कृतपुण्यस्तर्हि भजति, अन्यथा क्षुद्रदेवताभजनेन संसरति, एवमुत्तरत्रापि द्रष्टव्यम्। जिज्ञासुरात्मज्ञानेच्छुः अर्थार्थी अत्र परत्र च भोगसाधनभूतार्थप्रेप्सुः ज्ञानी चात्मवित्॥ १६॥

तेषां मध्ये ज्ञानी श्रेष्ठ इत्याह तेषामिति। तेषां मध्ये ज्ञानी विशिष्टः, तत्र हेतवः,—नित्ययुक्तः सदा मन्निष्ठः, एकस्मिन् मय्येव भक्तिर्यस्य सः ज्ञानिनो देहाद्यभिमानाभावेन चित्तविक्षेपाभावान्नित्ययुक्तत्वमेकान्तभक्तित्वञ्च सम्भवति नान्यस्य, अतएव तस्याह-

उदाराः सर्व्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्॥ १८
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभः॥ १९
कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया॥ २०

---

मत्यन्तं प्रियः, स च मम। तस्मादेतैर्नित्ययुक्तत्वादिभिश्चतुर्भिर्हेतुभिः स उत्तम इत्यर्थः॥ १७॥

तर्हि इतरे त्रयस्त्वद्भक्ताः किं संसरन्ति? न हि न इत्याह उदारा इति। सर्व्वेऽप्येते उदारा महान्तः मोक्षभाज एवेत्यर्थः, ज्ञानी तु पुनरात्मैवेति मे मतं निश्चयः, हि यस्मात् स ज्ञानी युक्तात्मा मदेकचित्तः सन्, न विद्यते उत्तमा यस्यास्तामनुत्तमां सर्व्वोत्तमां गतिं मामेवास्थित आश्रितवान् मद्व्यतिरिक्तमन्यत् फलं न मन्यत इत्यर्थः॥ १८॥

एवम्भूतो मद्भक्तोऽतिदुर्लभ इत्याह बहूनामिति। बहूनां जन्मनां किञ्चित् किञ्चित् पुण्योपचयेन अन्ते चरमे जन्मनि ज्ञानवान् सन् सर्व्वमिदं चराचरं वासुदेव इति सर्व्वात्मदृष्ट्या मां प्रपद्यते भजति, अतः स महात्मा अपरिच्छिन्नदृष्टिः सुदुर्लभः॥ १९॥

तदेवं कामिनोऽपि सन्तः कामप्राप्तये परमेश्वरमेव ये भजन्ति, ते कामान् प्राप्य शनैर्मुच्यन्त इत्युक्तं, ये त्वत्यन्तं राजसास्तामसाश्च कामाभिभूताः क्षुद्रदेवताः सेवन्ते, ते संसरन्तीत्याह कामैरिति चतुर्भिः। ये तु तैस्तैः पुत्रकीर्त्तिशत्रुजयादिविषयैः कामैरपहृत-विवेकाः सन्तोऽन्याः क्षुद्रा भूतप्रेतयक्षादिदेवता भजन्ति,—किं कृत्वा?—तत्तद्देवताराधने यो यो नियम उपवासादिलक्षणस्तं तं

यो यो यां यां तनुं भक्तः श्रद्धयार्च्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥ २१
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हि तान्॥ २२
अन्तवत् तु फलं तेषां तद्भवत्यल्पमेधसाम्।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि॥ २३

---

नियमं स्वीकृत्य, तत्रापि च स्वीयया प्रकृत्या पूर्व्वाभ्यासवासनया नियता वशीकृताः सन्तो देवताविशेषं भजन्ति॥ २०॥

तेषां मध्ये यो य इति। यो यो भक्तो यां यां तनुं देवतारूपां मदीयामेव मूर्त्तिं श्रद्धया अर्च्चितुम् इच्छति प्रवर्त्तते, तस्य तस्य भक्तस्य तत्तन्मूर्त्तिविषयां तामेव श्रद्धामचलां दृढ़ामहमन्तर्यामी विदधामि करोमि॥ २१॥

ततश्च स तयेति। स भक्तस्तया दृढ़या श्रद्धया तस्यास्तनो-राराधनमीहते करोति, ततश्च कामा ये सङ्कल्पितास्तांस्ततो देवता-विशेषाल्लभते, किन्तु मयैव तत्तद्देवतान्तर्यामिणा विहितान् निर्म्मितान् हि स्फुटमेतत्, तत्तद्देवतानामपि मदधीनत्वान्मन्मूर्त्ति-त्वाच्चेत्यर्थः॥ २२॥

तदेवं यद्यपि सर्व्वा अपि देवता ममैव तनवोऽतस्तदाराधन-मपि वस्तुतो मदाराधनमेव तत्तत्फलदातापि चाहमेव, तथापि साक्षान्मद्भक्तानाञ्च तेषाञ्च फलवैषम्यं भवतीत्याह अन्तवदिति। अल्पमेधसां परिच्छिन्नदृष्टीनां मया दत्तमपि तत्फलमन्तवत् विनाशि भवति। तदेवाह,—देवान् यजन्तीति देवयजस्ते देवानन्त-वतो यान्ति, मद्भक्तास्तु मामनाद्यनन्तं परमानन्दं प्राप्नुवन्ति॥२३॥

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४
नाहं प्रकाशः सर्व्वस्य योगमायासमावृतः।
मूढ़ोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५
वेदाहं समतीतानि वर्त्तमानानि चार्ज्जुन।
भविष्याणि च भूतानि मान्तु वेद न कश्चन ॥ २६

---

ननु च समाने प्रयासे महति च फलविशेषे सति सर्व्वेऽपि किमिति देवतान्तरं हित्वा त्वामेव न भजन्ति, तत्राह अव्यक्तमिति। अव्यक्तं प्रपञ्चातीतं मां व्यक्तिं मनुष्यमत्स्यकूर्म्मादिभावं प्राप्तमबुद्धयो मन्यन्ते। तत्र हेतुः,—मम परं भावं स्वरूपमजानन्तः। कथम्भूतम् ?—अव्ययं नित्यं, न विद्यते उत्तमो भावो यस्मात् तं मद्भावम्। अतो जगद्रक्षणार्थं लीलयाविष्कृतनानाविशुद्धोर्जित-सत्त्वमूर्त्तिं मां परमेश्वरं कर्म्मनिर्म्मितभौतिकदेहं देवतान्तरसमं पश्यन्तो मन्दमतयो मां नातीवाद्रियन्ते, प्रत्युत क्षिप्रफलदं देवतान्तरमेव भजन्ते, ते चोक्तप्रकारेणान्तवत् फलं प्राप्नुवन्तीत्यर्थः ॥ २४ ॥

तेषां स्वाज्ञाने हेतुमाह नाहमिति। सर्व्वस्य लोकस्य नाहं प्रकाशः प्रकटो न भवामि, किन्तु मद्भक्तानामेव, यतो योगमायया समावृतः, योगो युक्तिर्मदीयः कोऽप्यचिन्त्यः प्रज्ञाविलासः, स एव माया अघटमानघटनापटीयस्त्वात्, तया संछन्नः, अतएव मत्-स्वरूपज्ञाने मूढ़ः सन्नयं लोकोऽजमव्ययञ्च मां न जानातीति ॥ २५ ॥

सर्व्वोत्तमं मत्स्वरूपमजानन्त इत्युक्तं, तदेव स्वस्य सर्व्वोत्तमत्व-मनावृतज्ञानशक्तित्वेन दर्शयन्नन्येषामज्ञानमेवाह वेदाहमिति। समतीतानि विनष्टानि वर्त्तमानानि च तस्याः स्वाश्रयथामोहकत्वा-

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्व्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ॥ २७
येषान्त्वन्तगतं पापं जनानां पुण्यकर्म्मणाम् ।
ते द्वन्द्वमोहनिर्म्मुक्ता भजन्ते मां दृढ़व्रताः ॥ २८
जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म्म चाखिलम् ॥ २९

---

भावात्, मान्तु कोऽपि न वेत्ति मन्मायामोहितत्वात् । प्रसिद्धं हि लोके मायायाः स्वाश्रयाधीनत्वमन्यमोहकत्वञ्चेति ॥ २६ ॥

तदेवं मायाविषयत्वेन जीवानां परमेश्वराज्ञानमुक्तं, तस्यैवाज्ञानस्य दृढ़त्वे कारणमाह इच्छेति । सृज्यत इति सर्गः सर्गे स्थूलदेहोत्पत्तौ सत्यां तदनुकूले इच्छा, तत्प्रतिकूले च द्वेषस्ताभ्यां समुत्थः समुद्भूतो यः शीतोष्णसुखदुःखादिद्वन्द्वनिमित्तो मोहो विवेकभ्रंशस्तेन सर्व्वाणि भूतानि सम्मोहं यान्ति अहमेव सुखी दुःखी चेति गाढ़तरमभिनिवेशं प्राप्नुवन्ति, अतस्तानि मज्ज्ञानाभावान्मां न भजन्तीति भावः ॥ २७ ॥

कुतस्तर्हि केचन त्वां भजन्तो दृश्यन्ते, तत्राह येषामिति । येषान्तु पुण्याचरणशीलानां सर्व्वप्रतिबन्धकं पापमन्तगतं नष्टं, ते द्वन्द्वनिमित्तेन मोहेन विनिर्म्मुक्ताः दृढ़व्रता एकान्तिनः सन्तो मां भजन्ति ॥ २८ ॥

एवञ्च मां भजन्तस्ते सर्व्वं विज्ञेयं विज्ञाय कृतार्था भवन्तीत्याह जरेति । जरामरणयोर्निरसनार्थं मामाश्रित्य ये प्रयतन्ते, ते तत् परं ब्रह्म विदुः, कृत्स्नमध्यात्मञ्च विदुः येन तत् प्राप्तव्यं, तं देहादिव्यतिरिक्तं शुद्धमात्मानञ्च जानन्तीत्यर्थः, तत्साधनभूतमखिलं सरहस्यं कर्म्म च जानन्तीत्यर्थः ॥ २९ ॥

साधिभूताधिदैवं मां साधियज्ञञ्च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३०

इति श्रीमद्भगवद्गीतासूपनिषत्सु ज्ञानविज्ञानयोगो
नाम सप्तमोऽध्यायः ॥ ७ ॥

---

नन्वेवम्भूतानां योगभ्रंशशङ्कापीत्याह साधिभूतेति । अधिभूतादिशब्दानामर्थं श्रीभगवानेवोत्तराध्याये व्याख्यास्यति, अधिभूतेनाधिदैवेन च सह अधियज्ञेन च सह मां ये जानन्ति, ते युक्तचेतसो मय्यासक्तमनसः प्रयाणकालेऽपि मरणसमयेऽपि मां विदुर्जानन्ति, न तु तदापि व्याकुलीभूय मां विस्मरन्ति, अतो मद्भक्तानां न योगभ्रंशशङ्केति भावः ॥ ३० ॥

कृष्णभक्त्यैव यत्नेन ब्रह्मज्ञानमवाप्यते ।
इति विज्ञानयोगाख्ये सप्तमे सम्यगीरितम् ॥

इति श्रीधरस्वामिकृतायां टीकायां
सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

# अष्टमोऽध्यायः।

अर्ज्जुन उवाच।

किं तद्‌ब्रह्म किमध्यात्मं किं कर्म्म पुरुषोत्तम।
अधिभूतञ्च किं प्रोक्तमधिदैवं किमुच्यते ॥ १

अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २

श्रीभगवानुवाच।

अक्षरं परमं ब्रह्म स्वभावोऽध्यात्ममुच्यते।

---

ब्रह्मकर्म्माधिभूतादि विदुः कर्णैकचेतसः।
इत्युक्तं ब्रह्मकर्म्मादि स्पष्टमष्टम उच्यते ॥

पूर्व्वाध्यायान्ते भगवतोपक्षिप्तानां ब्रह्माध्यात्मादिसप्तपदार्थानां तत्त्वं जिज्ञासुरर्ज्जुन उवाच किं तद्‌ब्रह्मेतिद्वाभ्याम्। स्पष्टोऽर्थः ॥१॥

किञ्च अधियज्ञ इति। अत्र देहे यो यज्ञो वर्त्तते, तस्मिन् कोऽधियज्ञोऽधिष्ठाता प्रयोजकः फलदाता च क इत्यर्थः। स्वरूपं पृष्ट्वाधिष्ठानप्रकारं पृच्छति,—कथं केन प्रकारेण असावस्मिन् देहे स्थितः यज्ञमधितिष्ठतीत्यर्थः। यज्ञग्रहणं सर्व्वकर्म्मणामुपलक्षणार्थम्। अन्तकाले च नियतचित्तैः पुरुषैः कथं केनोपायेन ज्ञेयोऽसि ॥ २ ॥

प्रश्नक्रमेणैवोत्तरं श्रीभगवानुवाच अक्षरमिति त्रिभिः। न क्षरति न चलतीत्यक्षरम्। ननु जीवोऽप्यक्षरस्तत्राह,—परमं यदक्षरं जगतां मूलकारणं तद्‌ब्रह्म, "एतद्वै तदक्षरं गार्गि!

भूतभावोद्भवकरो विसर्गः कर्म्मसंज्ञितः॥ ३
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम्।
अधियज्ञोऽहमेवात्र देहे देहभृतांवर॥ ४



ब्राह्मणा अभिवदन्ति" इति श्रुतेः, तस्यैव ब्रह्मण एवांशतया जीवरूपेण भवनं स्वभावः, स एवात्मानं देहमधिकृत्य भोक्तृत्वेन वर्त्तमानोऽध्यात्मशब्देनोच्यत इत्यर्थः। भूतानां जरायुजादीनां भावः सत्ता उत्पत्तिः, उद्भवश्च "आदित्याज्जायते वृष्टिः" इति क्रमेण वृद्धिरुत्कृष्टत्वेन भवनमुद्भवः तौ भूतभावोद्भवौ करोति यो विसर्गो देवतोद्देशेन द्रव्यत्यागरूपो यज्ञः, सर्व्वकर्म्मणामुपलक्षणमेतत्, स च कर्म्मशब्दवाच्यः॥ ३॥

किञ्च अधिभूतमिति। क्षरो विनश्वरो भावः देहादिपदार्थः, भूतं प्राणिमात्रमधिकृत्य भवतीत्यधिभूतमुच्यते। पुरुषो वैराजः सूर्य्यमण्डलवर्त्ती स्वांशभूतसर्व्वदेवतानामधिपतिरधिदैवतमुच्यते, अधिदैवतमधिष्ठात्री देवता, "स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत" इति श्रुतेः। अत्रास्मिन् देहे स्थितोऽहमेवाधियज्ञो यज्ञस्याधिष्ठात्री देवता यज्ञादिकर्म्मप्रवर्त्तकस्तत्फलदाता च, कथमित्यस्याप्युत्तरमनेनैवोक्तं द्रष्टव्यम् अन्तर्यामिणोऽसक्तादिभिर्गुणैर्जीववैलक्षण्येन देहान्तर्व्वर्त्तित्वस्य प्रसिद्धत्वात्। तथाच श्रुतिः,—"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति"। देहभृतां मध्ये श्रेष्ठ इति सम्बोधयन् त्वमप्येवम्भूतमन्तर्यामिणं पराधीनस्वप्रवृत्तिनिवृत्त्यन्वयव्यतिरेकाभ्यां बोद्धमर्हसीति सूचयति॥ ४॥

अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम्।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥ ५
यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः॥ ६
तस्मात् सर्व्वेषु कालेषु मामनुस्मर युध्य च।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम्॥ ७
अभ्यासयोगयुक्तेन चेतसा नान्यगामिना।

---

प्रयाणकाले च कथं ज्ञेयोऽसीत्यनेन पृष्टमन्तकाले ज्ञानोपायं तत्फलञ्च दर्शयति अन्तकाल इति। मामीवोक्तलक्षणमन्तर्यामिरूपं परमेश्वरं स्मरन् देहं त्यक्त्वा यः प्रकर्षेण अर्च्चिरादिमार्गेण उत्तरायणपथा याति, स मद्भावं मद्रूपतां याति, अत्र संशयो नास्ति, स्मरणं ज्ञानोपायो मद्भावापत्तिश्च फलमित्यर्थः॥ ५॥

न केवलं मां स्मरन् मद्भावं प्राप्नोतीति नियमः, किं तर्हि यं यमिति। यं यं भावं देवतान्तरं वा अन्यमपि वा अन्तकाले स्मरन् देहं त्यजति, तं तमेव स्मर्य्यमाणं भावं प्राप्नोति। अन्तकाले भावविशेषस्मरणे हेतुः,—सदा तद्भावभावित इति। सर्व्वदा तस्य भावो भावनानुचिन्तनं तेन भावितो वासितचित्तः॥ ६॥

तस्मादिति। यस्मात् पूर्व्ववासनवान्तकाले स्मृतिर्हेतुर्न तु तदा विवशस्य स्मरणोद्यमः सम्भवति, अस्मात् सर्व्वदा मामनुस्मर अनुचिन्तय, तत् स्मरणं हि चित्तशुद्धिं विना न भवति, अतो युध्यस्व चित्तशुद्ध्यर्थं युद्धादिकं स्वधर्म्ममनुतिष्ठेत्यर्थः, एवं मय्यर्पितं मनः सङ्कल्पात्मकं बुद्धिश्च व्यवसायात्मिका येन त्वया स त्वमनायासेन मामेव प्राप्स्यसि, असंशयः संशयोऽत्र नास्ति॥ ७॥

सन्ततस्मरणस्य चाभ्यासोऽन्तरङ्गसाधनमिति दर्शयन्नाह

परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः ।
सर्व्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ९

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ १०

---

अभ्यासयोगेति । अभ्यासः सजातीयप्रत्ययप्रवाहः, स एव योग उपायस्तेन युक्तेनैकाग्रेण अतएव नान्यं विषयं गन्तुं शीलं यस्य तेन चेतसा दिव्य द्योतनात्मकं परमेश्वरमनुचिन्तयन् हे पार्थ ! तमेव यातीति ॥ ८ ॥

पुनरप्यनुचिन्तनीयं विशिनष्टि कविमिति द्वाभ्याम् । कविं सर्व्वज्ञं सर्व्वविद्यानिर्म्मातारं, पुराणमनादिसिद्धम्, अनुशासितारं नियन्तारम्, अणोः सूक्ष्मादप्यणीयांसमतिसूक्ष्मम् आकाशकाल-दिग्भ्योऽप्यतिसूक्ष्मतरं, सर्व्वस्य धातारं पोषकम्, अपरिमितमहिम-त्वादचिन्त्यरूपं मलीमसयोर्मनोबुद्ध्योरगोचरम्, आदित्यवत् स्वरूप-प्रकाशात्मको वर्णः स्वरूपं यस्य तं, तमसः प्रकृतेः परस्तादसंस्पृष्टं "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" इति श्रुतेः, सप्रपञ्चप्रकृतिं भित्त्वा यस्तिष्ठति, एवम्भूतं पुरुषम् अन्तकाले भक्ति-युक्तो निश्चलेन विक्षेपरहितेन मनसा योऽनुस्मरेत्, मनोनैश्चल्ये हेतुः—योगबलेन सम्यक् सुषुम्णामार्गेण भ्रुवोर्मध्ये प्राणमावेश्य इति, स तं परं पुरुषं परमात्मस्वरूपं दिव्यं द्योतनात्मकं प्राप्नोति ॥९॥१०॥

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति
तत् ते पदं संग्रहेण प्रवक्ष्ये ॥ ११
सर्व्वद्वाराणि संयम्य मनो हृदि निरुध्य च।
मूर्द्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ १३

---

केवलाभ्यासयोगादपि प्रणवाभ्यासमन्तरङ्गं विधित्सुः प्रतिजानीते यदक्षरमिति। यदक्षरं वेदार्थज्ञा वदन्ति, "एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्य्याचन्द्रमसौ विधृतौ तिष्ठत" इति श्रुतेः, वीतो रागो येभ्यस्ते वीतरागा यतयः प्रयत्नवन्तो यद्विशन्ति, यच्च ज्ञातुमिच्छन्तो गुरुकुले ब्रह्मचर्य्यं चरन्ति, तत् ते तुभ्यं पदं पद्यते गम्यत इति पदं प्राप्यं संग्रहेण संक्षेपेण प्रवक्ष्ये तत्प्राप्त्युपायं कथयिष्यामीत्यर्थः ॥ ११ ॥

प्रतिज्ञातमुपायं साङ्गमाह सर्व्वेति द्वाभ्याम्। सर्व्वाणीन्द्रियद्वाराणि संयम्य प्रत्याहृत्य चक्षुरादिभिर्बाह्यविषयग्रहणमकुर्व्वन्नित्यर्थः, मनश्च हृदि निरुध्य वाह्यविषयस्मरणमप्यकुर्व्वन्नित्यर्थः, मूर्द्ध्नि भ्रुवोर्मध्ये प्राणमाधाय योगस्य धारणां स्थैर्य्यमास्थित आश्रितवान् सन्। ओमिति। ओमित्येकं यदक्षरं तदेव ब्रह्मवाचकत्वात् ब्रह्मप्रतिमादिवद्ब्रह्मप्रतीकत्वाद्वा ब्रह्म, तद्व्याहरन्नुच्चारयन् तदार्थभूतं मामनुस्मरन्नेवं देहं त्यजन् यः प्रकर्षेण याति अर्च्चिरादिमार्गेण, स परमां श्रेष्ठां सद्गतिं प्राप्नोति ॥ १२ ॥ १३ ॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५
आ ब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्ज्जुन ।
मामुपेत्य तु कौन्तेय पुनर्ज्जन्म न विद्यते ॥ १६

---

एवञ्चान्तकाले धारणया मत्प्राप्तिर्नित्याभ्यासवशत एव भवति, नान्यस्येति पूर्व्वोक्तमेवानुस्मारयति अनन्येति। नास्त्यन्यस्मिन् चेतो यस्य तथाभूतः सन् यो मां सततं निरन्तरं नित्यशः प्रतिदिनं स्मरति, तस्य नित्ययुक्तस्य समाहितस्याहं सुखेन लभ्योऽस्मि, नान्यस्येति ॥ १४ ॥

यद्येवं सुलभोऽसि, ततः किमत आह मामिति। भक्तलक्षणा महात्मानो मद्भक्ता मां प्राप्य पुनर्दुःखाश्रयमनित्यञ्च जन्म न प्राप्नुवन्ति, यतस्ते परमां सिद्धिं मोक्षमेव प्राप्ताः। पुनर्जन्मनो दुःखानामालयं स्थानं मामुपेत्य न प्राप्नुवन्तीति वा ॥ १५ ॥

तदेवं सर्व्वेष्वपि लोकेषु पुनरावृत्तिं दर्शयन् निर्द्धारयति आ ब्रह्मभुवनादिति। ब्रह्मणो भुवनं वासस्थानं ब्रह्मलोकस्तमभिव्याप्य सर्व्वे लोकाः पुनरावर्त्तनशीलाः ब्रह्मलोकस्यापि विनाशित्वात्, तत्प्राप्तानामनुत्पन्नज्ञानानामवश्यम्भावि पुनर्ज्जन्म, य एवं क्रममुक्तिफलाभिरुपासनाभिर्ब्रह्मलोकं प्राप्तास्तेषामेव तत्रोत्पन्नज्ञानानां ब्रह्मणा सह मोक्षो नान्येषाम्। तथाच,—"ब्रह्मणा सह ते सर्व्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥" परस्यान्ते ब्रह्मणः परमायुषोऽन्ते कृतात्मानो ब्रह्मभावापादितमनोवृत्तयः,

सहस्रयुगपर्य्यन्तमहर्यद्ब्रह्मणो विदुः।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः॥ १७
अव्यक्ताद्व्यक्तयः सर्व्वाः प्रभवन्त्यहरागमे।

---

कर्म्मद्वारेण येषां ब्रह्मलोकप्राप्तिस्तेषां न मोक्ष इति पारनिष्ठितिः, मामुपेत्य वर्त्तमानानान्तु पुनर्ज्जन्म नास्त्येवेति॥ १६॥

ननु च "तपस्विनो दानशीला वीतरागास्तितिक्षवः। त्रैलोक्यस्योपरि स्थानं लभन्ते शोकवर्ज्जितम्॥" इत्यादिपुराणवाक्यैस्त्रिलोक्याः सकाशान्महर्लोकादीनामुत्कृष्टत्वं गम्यते, विनाशित्वे च सर्व्वेषामवशिष्टे कथमसौ विशेषः स्यादित्याशङ्क्य बहुकालावस्थायित्वनिमित्तोऽसौ विशेष इत्याशयेन स्वमानेन शतवर्षायुषो ब्रह्मणोऽन्यहनि त्रिलोक्या उत्पत्तिर्निशि निशि च प्रलयो भवतीति दर्शयिष्यन् ब्रह्मणोऽहोरात्रयोः प्रमाणमाह सहस्रेति। सहस्रं युगानि पर्य्यन्तोऽवसानं यस्य तद्ब्रह्मणो यदहस्तद्ये विदुः, युगसहस्रमन्तो यस्यास्तां रात्रिञ्च योगबलेन ये विदुस्त एव सर्व्वज्ञा जना अहोरात्रविदः, येषान्तु केवलं चन्द्रादित्यगत्यैव ज्ञानं, ते तथाहोरात्रविदो न भवन्ति अल्पदर्शित्वात्। युगशब्देनात्र चतुर्युगमभिप्रेतं "चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते" इति विष्णुपुराणोक्तेः। ब्रह्मण इति च महर्लोकादिवासिनामुपलक्षणार्थम्। तत्रायं कालगणनाप्रकारः,—मनुष्याणां यदब्दं तद्देवानामहोरात्रं तादृशैरहोरात्रैः पक्षमासादिकल्पनया स्वदशभिर्वर्षसहस्रैश्चतुर्युगं भवति चतुर्युगसहस्रन्तु ब्रह्मणो दिनं, तावत्प्रमाणैव रात्रिस्तादृशैश्चाहोरात्रैः पक्षमासादिक्रमेण वर्षशतं ब्रह्मणः परमायुरिति॥ १७॥

ततः किमत आह अव्यक्तादित्यादि। कार्य्यस्याव्यक्तरूपं कारणात्मकं तस्मादव्यक्तात् कारणरूपात् व्यज्यन्त इति व्यक्तयश्चराचराणि

रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९
परस्तस्मात् तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः ।
यः स सर्व्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।

---

भूतानि प्रादुर्भवन्ति । कदा ?—अहरागमे ब्रह्मणो दिवसस्योपक्रमे । तथा रात्रेरागमे ब्रह्मशयने तस्मिन्नेवाव्यक्तसंज्ञके कारणरूपे प्रलयं यान्ति । यद्वा तेऽहोरात्रविद इत्येतन्न विधीयते, किन्तु ते प्रसिद्धा अहोरात्रविदो जना ब्रह्मणो यदहर्विदुस्तस्याह्न आगमेऽव्यक्ताद्व्यक्तय: प्रभवन्ति, याञ्च रात्रिं विदुस्तस्या रात्रेरागमे प्रलीयन्त इति द्वयोरन्वयः ॥ १८ ॥

तत्र च कृतनाशाकृताभ्यागमशङ्कां वारयन् वैराग्यार्थं सृष्टि-प्रलयप्रवाहस्याविच्छेदं दर्शयति भूतग्राम इति । भूतानां चराचर-प्राणिनां ग्रामः समूहो यः प्रागासीत्, स एवायमहरागमे भूत्वा भूत्वा रात्रेरागमे प्रलीयते प्रलीय प्रलीय पुनरप्यहरागमेऽवशः कर्म्मादिपरतन्त्रः सन् प्रभवति नान्य इत्यर्थः ॥ १६ ॥

लोकानामनित्यत्वं प्रपञ्च्य परमेश्वरस्वरूपस्य नित्यत्वं प्रपञ्चयति पर इति द्वाभ्याम् । तस्माच्चराचरकारणभूतादव्यक्तात् परस्तस्यापि कारणभूतो योऽन्यस्तद्विलक्षणोऽव्यक्तश्चक्षुराद्यगोचरो भावः सनातनो-ऽनादिः, स तु सर्व्वेषु कार्य्यकारणलक्षणेषु भूतेषु नश्यत्स्वपि न विनश्यति । अविनाशे प्रमाणं दर्शयन्नाह अव्यक्त इति । यो-भावोऽतीन्द्रियः अक्षरः प्रवेशनाशशून्य इति तथा "अक्षरात् सम्भव-तीह विश्वम्" इत्यादि श्रुतिष्वक्षर इत्युक्तः, तं परमां गतिं गम्यं

यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम ॥ २१
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम् ॥ २२
यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३

---

पुरुषार्थमाहुः, "पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इत्यादिश्रुतयः । परमगतित्वमेवाह,—यं प्राप्य न पुनर्निवर्त्तन्त इति । तच्च ममैव धाम स्वरूपम् । ममेत्युपचारे षष्ठी राहोः शिर इतिवत् । अतोऽहमेव परमा गतिरित्यर्थः ॥ २० ॥ २१ ॥

तत्प्राप्तौ च भक्तिरन्तरङ्गोपाय इत्युक्तमेवेत्याह पुरुष इति । स चाहं परः पुरुषोऽनन्यया न विद्यतेऽन्यः शरणत्वेन यस्यास्तया एकान्तभक्त्यैव लभ्यो नान्यथा । परत्वमेवाह,—यस्य कारणभूतस्यान्तर्मध्ये भूतानि स्थितानि, येन च कारणभूतेनेदं सर्व्वं जगत् ततं व्याप्तम् ॥ २२ ॥

तदेवं परमेश्वरोपासकास्तत्पदं प्राप्य न निवर्त्तन्ते, अन्ये त्वावर्त्तन्त इत्युक्तं, तत्र केन मार्गेण गता नावर्त्तन्ते, केन वावर्त्तन्त इत्यपेक्षायामाह यत्रेति । यत्र यस्मिन् काले प्रयाता योगिनोऽनावृत्तिं यान्ति, यस्मिंश्च काले प्रयाता आवृत्तिं यान्ति, तं कालं वक्ष्यामीत्यन्वयः । अत्र च रश्म्यनुसारी अतश्चायनेऽपि दक्षिण इति सूत्रितन्यायेनोत्तरायणादिकालविशेषमरणस्य त्वविवक्षितत्वात् कालशब्देन कालाभिमानिनीभिरातिवाहिकीभिर्देवताभिः प्राप्यो मार्ग उपलक्ष्यते, अतोऽयमर्थः,—यस्मिन् कालाभिमानिदेवतोपलक्षिते मार्गे प्रयाता योगिन उपासकाः कर्म्मिणश्च यथाक्रममनावृत्तिञ्च यान्ति, तं कालाभिमानिदेवतोपलक्षितं मार्गं कथयिष्यामीति ।

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥ २४
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते॥ २५

---

अग्निज्योतिषोः कालाभिमानित्वाभावेऽपि भूयसामहरादिशब्दोक्तानां साहचर्य्यादाम्रवणमित्यादिवत् कालशब्देनोपलक्षणमविरुद्धम्॥ २३॥

तत्रानावृत्तिमार्गमाह अग्निरिति। अग्निर्ज्योतिःशब्दाभ्यां "तेऽर्च्चिषमभिसम्भवन्ती" इति श्रुत्युक्तार्च्चिरभिमानिनी देवतोपलक्ष्यते, अहरिति दिवसाभिमानिनी, शुक्ल इति शुक्लपक्षाभिमानिनी, उत्तरायणरूपाः षण्मासा इत्युत्तरायणाभिमानिनी, एतच्चान्यासामपि श्रुत्युक्तानां संवत्सरदेवलोकादिदेवतानामुपलक्षणार्थम्, एवम्भूतो यो मार्गस्तत्र प्रयाता गता भगवदुपासका जना ब्रह्म प्राप्नुवन्ति, यतस्ते ब्रह्मविदः। तथाच श्रुतिः,—"तेऽर्च्चिषमभिसम्भवन्ति अर्च्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकम्" इति॥ २४॥

आवृत्तिमार्गमाह धूम इति। धूमाभिमानिनी देवता, रात्र्यादिशब्दैश्च पूर्ववदेव रात्रिकृष्णपक्षदक्षिणायनरूपषण्मासाभिमानिन्यस्तिस्रो देवता उपलक्ष्यन्ते, एताभिरुपलक्षितो यो मार्गस्तत्र प्रयातः कर्म्मयोगी चान्द्रमसं ज्योतिस्तदुपलक्षितं स्वर्गलोकं प्राप्य तत्रेष्टापूर्त्तकर्म्मफलं भुक्त्वा पुनरावर्त्तते। तत्रापि श्रुतिः,—"ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाण पक्षाद्यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकात्

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
एकया यात्यनावृत्तिमन्ययावर्त्तते पुनः॥ २६
नैते सृती पार्थ जानन् योगी मुह्यति कश्चन।
तस्मात् सर्व्वेषु कालेषु योगयुक्तो भवार्ज्जुन॥ २७
वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत् पुण्यफलं प्रदिष्टम्।

---

चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति" इत्यादि। तदेवं निवृत्तिकर्म्म-सहितोपासनया क्रममुक्तिः, काम्यकर्म्मभिश्च स्वर्गभोगानन्तरमावृत्तिः, निषिद्धकर्म्मभिस्तु नरकभोगानन्तरमावृत्तिः, क्षुद्रकर्म्मणान्तु जन्तूनाम् अत्रैव पुनःपुनर्जन्मेति द्रष्टव्यम्॥ २५॥

उक्तमार्गावुपसंहरति शुक्लेति। शुक्लार्चिरादिगतिः प्रकाशमयत्वात्, कृष्णा धूमादिगतिस्तमोमयत्वात्, एते गती मार्गौ ज्ञान-कर्म्माधिकारिणो जगतः शाश्वते अनादी सम्मते संसारस्यानादित्वात्, तयोरेकया शुक्लया अनावृत्तिं मोक्षं याति, अन्यया कृष्णया तु पुनरावर्त्तते॥ २६॥

मार्गज्ञानफलं दर्शयन् भक्तियोगमुपसंहरति नैते इति। एते सृती मार्गौ मोक्षसंसारप्रापकौ जानन् कश्चिदपि योगी न मुह्यति सुखबुद्ध्या स्वर्गादिफलं न कामयते, किन्तु परमेश्वरनिष्ठ एव भवतीत्यर्थः। स्पष्टमन्यत्॥ २७॥

अध्यायार्थमष्टप्रश्नार्थनिर्णयं सफलमुपसंहरति वेदेष्विति। वेदेषु अध्ययनादिभिः, यज्ञेषु अनुष्ठानादिभिः, तपःसु कायशोषणादिभिः, दानेषु सत्पात्रेऽर्पणादिभिः, यत् पुण्यफलमुपदिष्टं शास्त्रेषु तत्सर्व्वमत्येति ततोऽपि श्रेष्ठं योगैश्वर्य्यं प्राप्नोति। किं ज्ञात्वा?—

अत्येति तत् सर्व्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८

इति श्रीमद्भगवद्गीतासूपनिषत्सु अक्षरब्रह्मयोगो
नाम अष्टमोऽध्यायः ॥ ८ ॥

---

इदमष्टप्रश्नार्थनिर्णयेनोक्तं तत्त्वं विदित्वा, ततश्च योगी ज्ञानी भूत्वा परमुत्कृष्टम् आद्यं जगन्मूलभूतं स्थानं विष्णोः पदं प्राप्नोति ॥ २८ ॥

इति श्रीधरस्वामिकृतटीकायां अष्टमो-
ऽध्यायः समाप्तः ॥ ८ ॥

---

# नवमोऽध्यायः ।

श्रीभगवानुवाच ।

इदन्तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १
राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्म्यं सुसुखं कर्त्तुमव्ययम् ॥ २

---

परेशः प्राप्यते शुद्धभक्त्येति स्थितमष्टमे ।
नवमे तु तदैश्वर्य्यमत्याश्चर्य्यं प्रपञ्च्यते ॥

एवं तावत् सप्तमाष्टमयोः स्वीयपरमेश्वरतत्त्वं भक्त्यैव सुलभः, नान्यथेत्युक्तमिदानीमचिन्त्यं स्वकीयमैश्वर्य्यं भक्तेश्चालाधारणं प्रभावं प्रपञ्चयिष्यन् श्रीभगवानुवाच इदमिति । विशेषेण ज्ञायते अनेनेति विज्ञानमुपासनं तत्सहितं ज्ञानमीश्वरविषयमिदन्तु तेऽनसूयवे पुनः-पुनः स्वमाहात्म्यमेवोपदिशतीत्येवं परमकारुणिके मयि दोषदृष्टि-रहिताय तुभ्यं वक्ष्यामि । तुशब्दो वैशिष्ट्ये । तदेवाह गुह्यतम-मित्यादिना । गुह्यं धर्म्मज्ञानं, ततो देहाद्यतिरिक्तात्मज्ञानं गुह्यतरं, ततोऽपि परमात्मज्ञानमतिरहस्यत्वाद्गुह्यतमम् । यज्-ज्ञात्वाऽशुभात् संसारबन्धान्मोक्ष्यसे सद्य एव मुक्तो भविष्यसि ॥ १ ॥

किञ्च राजविद्येति । इदं ज्ञानं राजविद्या विद्यानां राजा, राजगुह्यं गुह्यानाञ्च राजा, विद्यासु गोप्येषु चातिरहस्यं श्रेष्ठ-मित्यर्थः । राजदन्तादित्वादुपसर्ज्जनस्यापि परत्वम् । राज्ञां विद्या राज्ञां गुह्यमिति वा । उत्तमं पवित्रमिदमत्यन्तपावनं, ज्ञानिनां प्रत्यक्षावगमञ्च प्रत्यक्षः स्पष्टोऽवगमोऽवबोधो यस्य तत् प्रत्यक्षावगमं

अश्रद्दधानाः पुरुषा धर्म्मस्यास्य परन्तप ।
अप्राप्य मां निवर्त्तन्ते मृत्युसंसारवर्त्मनि ॥ ३
मया ततमिदं सर्व्वं जगदव्यक्तमूर्त्तिना ।
मत्स्थानि सर्व्वभूतानि न चाहं तेष्ववस्थितः ॥ ४
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।

---

दृष्टफलमित्यर्थः, धर्म्म्यं धर्म्मादनपेतं वेदोक्तसर्व्वधर्म्मफलत्वात्, कर्त्तुञ्च सुसुखं सुखेन कर्त्तुं शक्यमित्यर्थः, अव्ययञ्चाव्ययफलत्वात् ॥ २ ॥

नन्वेवमप्यतिसुकरत्वेन के नाम संसारिणः स्युरित्याह अश्रद्दधाना इति । अस्य भक्तिसहितज्ञानलक्षणस्य धर्म्मस्येति कर्म्मणि षष्ठी । इमं धर्म्ममश्रद्दधाना आस्तिक्येनास्वीकुर्व्वन्त उपायान्तरैर्मत्प्राप्तये कृतप्रयत्ना अपि मामप्राप्य मृत्युयुक्ते संसारवर्त्मनि निवर्त्तन्ते मृत्युव्याप्ते संसारमार्गे परिभ्रमन्तीत्यर्थः ॥ ३ ॥

तदेवं वक्तव्यतया प्रस्तुतस्य ज्ञानस्य स्तुत्या श्रोतारमभिमुखीकृत्य तदेव ज्ञानं कथयति मयेति द्वाभ्याम् । अव्यक्ता अतीन्द्रिया मूर्त्तिः स्वरूपं यस्य तादृशेन मया कारणभूतेन सर्व्वमिदं जगत् ततं व्याप्तं "तत् सृष्ट्वा तदेवानुप्राविशत्" इत्यादि श्रुतेः, अतएव कारणभूते मयि तिष्ठन्तीति मत्स्थानि सर्व्वाणि भूतानि चराचराणि, एवमपि घटादिषु स्वकार्य्येषु मृत्तिकेव तेषु भूतेषु नाहमवस्थित आकाशवदसङ्गत्वात् ॥ ४ ॥

किञ्च न चेति । न च मयि स्थितानि भूतानि असङ्गत्वादेव मम । ननु तर्हि व्यापकत्वमाश्रयत्वञ्च पूर्व्वोक्तं विरुद्धमित्याशङ्क्याह पश्येति । मे ऐश्वरमसाधारणं योगं युक्तिं अघटनघटनाचातुर्य्यमिदं पश्य, मदीययोगमायावैभवस्याविततर्क्यत्वान्न किञ्चिद्विरुद्धमित्यर्थः । अन्यदप्याश्चर्य्यं पश्येत्याह भूतेति । भूतानि बिभर्त्ति

भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५
यथाकाशस्थितो नित्यं वायुः सर्व्वत्रगो महान्।
तथा सर्व्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६
सर्व्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८

---

धारयतीति भूतभृत्, भूतानि भावयति पालयतीति भूतभावनः, एतम्भूतोऽपि ममात्मा परं स्वरूपं भूतस्थो न भवतीति। अयं भावः,— यथा देहं बिभ्रत् पालयंश्च जीवोऽहङ्कारेण तत्संश्लिष्टस्तिष्ठति, एवमहं भूतानि धारयन् पालयन्नपि तेषु न तिष्ठामि निरहङ्कारत्वादिति ॥ ५

असंश्लिष्टयोरपि आधाराधेयभावं दृष्टान्तेनाह यथेति। अवकाशं विनावस्थानानुपपत्तेर्नित्यमाकाशस्थितो वायुर्यथा। सर्व्वत्रगोऽपि महानपि नाकाशेन संश्लिष्यते निरवयवत्वेन संश्लेषायोगात्, तथा सर्व्वाणि भूतानि मयि स्थितानि जानीहि ॥ ६ ॥

तदेवमसङ्गस्यैव योगमायया स्थितिहेतुत्वमुक्तं, तथैव सृष्टि-प्रलयहेतुत्वञ्चाह सर्व्वेति। कल्पक्षये प्रलयकाले सर्व्वाणि भूतानि मदीयां प्रकृतिं यान्ति त्रिगुणात्मिकायां मायायां लीयन्ते, पुनः कल्पादौ सृष्टिकाले तानि विसृजामि विशेषेण सृजामि ॥ ७ ॥

नन्वसङ्गो निर्व्विकारश्च त्वं कथं सृजसीत्यपेक्षायामाह प्रकृति-मित्यादि। स्वां स्वाधीनां प्रकृतिमवष्टभ्य अधिष्ठाय प्रलये लीनं सन्तं चतुर्व्विधमिमं सर्व्वं भूतग्रामं कर्म्मादिपरवशं पुनःपुनर्विविधं सृजामि विशेषेण सृजामीति वा। कथम्?—प्रकृतेर्वशात् प्राचीन-कर्म्मनिमित्ततत्तत्स्वभाववशात् ॥ ८ ॥

न च तानि कर्म्माणि निबध्नन्ति धनञ्जय।
उदासीनवदासीनमसक्तं तेषु कर्म्मसु॥ ९
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनानेन कौन्तेय जगद्विपरिवर्त्तते॥ १०
अवजानन्ति मां मूढ़ा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम्॥ ११
मोघाशा मोघकर्म्माणो मोघज्ञाना विचेतसः।

---

नन्वेवं नानाविधानि कर्म्माणि कुर्व्वतस्तव जीववद्बन्धः कथं न स्यादित्यत आह न च मामिति। तानि विश्वसृष्ट्यादीनि कर्म्माणि मां न निबध्नन्ति कर्म्मासक्तिर्हि बन्धहेतुः, सा चाप्तकामत्वान्मम नास्ति, अत उदासीनवद्वर्त्तमानस्य मे बन्धं नोपपादयन्ति, उदासीनत्वे कर्त्तृत्वानुपपत्तेरुदासीनवत् स्थितमित्युक्तम्॥ ९॥

तदेवोपपादयति मयेति। मया अध्यक्षेण अधिष्ठात्रा निमित्तभूतेन प्रकृतिः सचराचरं विश्वं सूयते जनयति, अनेन मदधिष्ठानेन हेतुना इदं जगद्विपरिवर्त्तते पुनःपुनर्जायते, सन्निधिमात्रेणाधिष्ठातृत्वात् कर्त्तृत्वमुदासीनत्वञ्चाविरुद्धमिति भावः॥ १०॥

नन्वेवम्भूतं परमेश्वरं त्वां किमिति केचिन्नाद्रियन्ते, तत्राह अवजानन्तीति द्वाभ्याम्। सर्व्वभूतमहेश्वररूपं मदीयं परं भावं तत्त्वमजानन्तो मूढ़ा मूर्खा मामवजानन्ति मामवमन्यन्ते। अवज्ञाने हेतुः शुद्धसत्त्वमयीमपि तनुं भक्तेच्छावशान्मनुष्याकारामाश्रितवन्तमिति॥ ११॥

किञ्च मोघाशा इति। मत्तोऽन्यद्देवतान्तरं क्षिप्रं फलं दास्यतीत्येवम्भूता मोघा निष्फलैवाशा येषां ते, अतएव मद्विमुखत्वान्मोघानि निष्फलानि कर्म्माणि येषां ते, मोघमेव नानाकुतर्काश्रितं

राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३
सततं कीर्त्तयन्तो मां यतन्तश्च दृढ़व्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४
ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५

---

ध्यात्मज्ञानं येषां ते,अतएव विचेतसो विक्षिप्तचित्ताः। सर्व्वत्र हेतुः,—राक्षसीं तामसीं हिंसादिप्रचुराम्, आसुरीञ्च राजसीं कामदर्पादि-बहुलां मोहिनीं बुद्धिभ्रंशकरीं प्रकृतिं स्वभावं श्रिताः आश्रिताः सन्तो मामवजानन्तीति पूर्व्वेणैवान्वयः ॥ १२ ॥

के तर्हि त्वामाराधयन्तीत्यत आह महात्मान इति। महात्मानः कामाद्यनभिभूतचित्ताः, अतएव अभयं सत्त्वसंशुद्धिरित्यादिना वक्ष्यमाणां दैवीं प्रकृतिं स्वभावमाश्रिताः, अतएव मद्व्यतिरेकेण नास्त्यन्यस्मिन् मनो येषां ते तु भूतादिं जगत्कारणम् अव्ययं नित्यञ्च मां ज्ञात्वा भजन्ति ॥ १३ ॥

तेषां भजनप्रकारमाह सततमिति द्वाभ्याम्। सततं सर्व्वदा स्तोत्रमन्त्रादिभिः कीर्त्तयन्तः केचिन्मामुपासते सेवन्ते, दृढ़ानि व्रतानि नियमा येषां तादृशाः सन्तो यतन्तश्च ऐश्वर्य्यज्ञानादिषु प्रयत्नं कुर्व्वन्तः केचित्, केचिद्भक्त्या नमस्यन्तश्च प्रणमन्तः, अन्ये नित्ययुक्ता अनवरतमवहिताः सेवन्ते। भक्त्येति नित्ययुक्ता इति च कीर्त्तना-दिष्वपि द्रष्टव्यम् ॥ १४ ॥

किञ्च ज्ञानेति। वासुदेवः सर्व्वमित्येवं सर्व्वात्मदर्शनं ज्ञानं, तदेव यज्ञस्तेन ज्ञानयज्ञेन मां यजन्तः पूजयन्तोऽन्येऽप्युपासते, तत्रापि

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६

पिताहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च ॥ १७

गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत्।
प्रभवः प्रलयः स्थानं निधानं वीजमव्ययम् ॥ १८

---

केचिदेकत्वेनाभेदभावनया, केचित् पृथग्भावनया दासोऽहमिति, केचित् तु विश्वतोमुखं सर्व्वात्मकं मां बहुधा ब्रह्मरुद्रादिरूपेणो-पासते ॥ १५ ॥

सर्व्वात्मतां प्रपञ्चयति अहं क्रतुरिति चतुर्भिः। क्रतुः श्रौतो-ऽग्निष्टोमादिः, यज्ञः स्मार्त्तः पञ्चयज्ञादिः, स्वधा पित्रर्थं श्राद्धादिः, औषधम् ओषधिप्रभवमन्नं भेषजं वा, मन्त्रो याज्यपुरोधोवाक्यादिः, आज्यं होमादिसाधनम्, अग्निराहवनीयादिः, हुतं होमः, एतत् सर्व्वमहमेव ॥ १६ ॥

किञ्च पिताहमस्येति। धाता कर्म्मफलविधाता, वेद्य ज्ञेयं वस्तु, पवित्रं शोधकं प्रायश्चित्तात्मकं वा, ओङ्कारः प्रणवः, ऋगादयो वेदाश्चाहमेव। स्पष्टमन्यत् ॥ १७ ॥

किञ्च गतिरिति। गम्यत इति गतिः फलं, भर्त्ता पोषणकर्त्ता, प्रभुर्नियन्ता, साक्षी शुभाशुभद्रष्टा, निवासो भोगस्थानं, शरणं रक्षकः, सुहृत् हितकर्त्ता, प्रकर्षेण भवत्यनेनेति प्रभवः स्रष्टा, प्रली-यतेऽनेनेति प्रलयः संहर्त्ता, तिष्ठन्त्यस्मिन्निति स्थानमाधारः, निधी-यतेऽस्मिन्निति निधानं लयस्थानं, वीजं कारणं, तथाप्यव्ययमविनाशि न तु व्रीह्यादिवीजवद्विनश्वरमित्यर्थः ॥ १८ ॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।
अमृतञ्चैव मृत्युश्च सदसच्चाहमर्ज्जुन ॥ १९

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान् दिवि देवभोगान् ॥ २०

---

किञ्च तपाम्यहमिति। आदित्यात्मना स्थित्वा निदाघकाले तपामि जगतस्तापं करोमि, वृष्टिसमये च वर्षमुत्सृजामि विसृजामि, कदाचित् तु वर्षं निगृह्णामि आकर्षामि, अमृतं जीवनं मृत्युश्च नाशः, सत् स्थूलं दृश्यम् असच्च सूक्ष्ममदृश्यम् एतत् सर्व्वमहमेवेति एवं मत्वा मामेव बहुधोपासते इति पूर्व्वेणैवान्वयः ॥ १९ ॥

तदेवमवजानन्ति मां मूढ़ा इत्यादिश्लोकद्वयेन क्षिप्रफलाशया देवतान्तरं यजन्तो मां नाद्रियन्त इत्यभक्ता दर्शिताः, महात्मानस्तु मां पार्थेत्यादिना च भक्ता उक्तास्तैकत्वेन पृथक्त्वेन वा ये परमेश्वरं न भजन्ति, तेषां जन्ममृत्युप्रवाहो दुर्व्वार इत्याह त्रैविद्या इति द्वाभ्याम्। ऋग्यजुःसामलक्षणास्तिस्रो विद्या येषां ते त्रिविद्यास्त्रिविद्या एव त्रैविद्याः स्वार्थेऽण्। तिस्रो विद्या अधीयन्ते जानन्तीति वा त्रैविद्या वेदत्रयोक्तकर्म्मपरा इत्यर्थः, वेदत्रयविहितैर्यज्ञैर्म्मामिष्ट्वा ममैव रूपं देवतान्तरमित्यजानन्तोऽपि वस्तुत इन्द्रादिरूपेण मामेवेष्ट्वा संपूज्य यज्ञशेषं सोमं पिबन्तीति सोमपास्तेनैव पूतपापाः शोधितकल्मषाः सन्तः स्वर्गतिं स्वर्गं प्रति गतिं ये प्रार्थयन्ते, ते पुण्यफलरूपं सुरेन्द्रलोकं स्वर्गमासाद्य प्राप्य दिवि स्वर्गे दिव्यानुत्तमान् देवानां भोगानश्नन्ति भुञ्जते ॥ २० ॥

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्त्यलोकं विशन्ति।
एवं त्रयीधर्म्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २१
अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२
येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्व्वकम् ॥ २३
अहं हि सर्व्वयज्ञानां भोक्ता च प्रभुरेव च।

---

ततश्च ते तमिति। ते स्वर्गकामास्तं प्रार्थितं विपुलं स्वर्गलोकं तत्सुखं भुक्त्वा भोगप्रापके पुण्ये क्षीणे सति मर्त्त्यलोकं विशन्ति, पुनरप्येवमेव वेदत्रयविहितं धर्म्ममनुगताः कामकामा भोगान् कामयमाना गतागतं यातायातं लभन्ते ॥ २१ ॥

मद्भक्तास्तु मत्प्रसादेन कृतार्था भवन्तीत्याह अनन्या इति। अनन्या नास्ति मद्व्यतिरेकेणान्यत् काम्यं येषां ते तथाभूता ये जना मां चिन्तयन्तः सेवन्ते, तेषान्तु नित्याभियुक्तानां सर्व्वथा मदेकनिष्ठानां योगं धनादिलाभं क्षेमञ्च तत्पालनं, मोक्षं वा, तैरप्रार्थितमपि अहमेव वहामि प्रापयामि ॥ २२ ॥

ननु च त्वद्व्यतिरेकेण वस्तुतो देवतान्तरस्याभावादिन्द्रादिसेविनोऽपि त्वद्भक्ता एवेति कथं ते गतागतं लभेरंस्तत्राह येऽपीति। श्रद्धयोपेताः सन्तो ये जना अन्यदेवता इन्द्रादिरूपा यजन्ते, तेऽपि मामेव यजन्तीति सत्यं किन्तु अविधिपूर्व्वकं मोक्षप्रापकं विधिं विना यजन्ति, अतस्ते पुनरावर्त्तन्ते ॥ २३ ॥

एतदेव विवृणोति अहमिति। सर्व्वेषां यज्ञानां तत्तद्देवता-

न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् २५

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६

---

रूपेणाहमेव भोक्ता प्रभुश्च स्वामी फलदाताप्यहमेवेत्यर्थः, एवम्भूतं मां ते तत्त्वेन यथावन्नाभिजानन्ति, अतश्च्यवन्ति प्रच्यवन्ते पुनरावर्त्तन्ते, ये तु सर्व्वदेवतासु मामेवान्तर्यामिणं पश्यन्तो यजन्ति, ते तु नावर्त्तन्ते ॥ २४ ॥

तदेवोपपादयति यान्तीति। देवेष्विन्द्रादिषु व्रतं नियमो येषां ते देवव्रता देवान् यान्ति अतः पुनरावर्त्तन्ते, पितृषु व्रतं येषां श्राद्धादिक्रियापराणां ते पितॄन् यान्ति, भूतेषु विनायकमातृगणादिषु इज्या पूजा येषां ते भूतेज्या भूतानि यान्ति, मां यष्टुं शीलं येषां ते मद्याजिनस्ते तु मामव्ययं परमानन्दस्वरूपं यान्ति ॥ २५ ॥

तदेवं स्वभक्तानामव्ययफलमुक्त्वा अनायासत्वञ्च स्वभक्तेर्दर्शयति पत्रमिति। पत्रपुष्पादिमात्रमपि मह्यं भक्त्या यः प्रयच्छति, तस्य प्रयतात्मनः शुद्धचित्तस्य निष्कामभक्तस्य तत् पत्रपुष्पादिकं भक्त्या तेनोपहृतं समर्पितमहमश्नामि प्राप्नोमि प्रीत्या गृह्णामि, न हि महाविभूतिपतेः परमेश्वरस्य मम क्षुद्रदेवतानामिव बहुवित्तसाध्ययागादिभिः परितोषः स्यात् किन्तु भक्तिमात्रेण, अतो भक्तेन समर्पितं यत्किञ्चित् पत्रादिमात्रमपि तदनुग्रहार्थमेवाश्नामीति भावः ॥ २६ ॥

यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्॥ २७
शुभाशुभफलैरेवं मोक्ष्यसे कर्म्मबन्धनैः।
सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि॥ २८
समोऽहं सर्व्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्॥ २९
अपि चेत् सुदुराचारो भजते मामनन्यभाक्।

---

न च फलपुष्पादिकमपि यज्ञार्थपशुसोमादिद्रव्यवन्मदर्थमेवोद्यमेनापाद्य समर्पणीयं, किं तर्हि यत् करोषीति। स्वभावतः शास्त्रतो वा यत्किञ्चित् कर्म्म करोषि, तथा यदश्नासि, यज्जुहोषि, यद्ददासि, यच्च तपस्यसि तपः करोषि, तत् सर्व्वं मय्यर्पितं यथा भवति एवं कुरुष्व। एवञ्च यत् फलं प्राप्स्यसि तच्छृणु इत्याह शुभाशुभेति। एवं कुर्व्वन् कर्म्मबन्धनैः कर्म्मनिमित्तैरिष्टानिष्टफलैर्मुक्तो भविष्यसि कर्म्मणां मयि समर्पितत्वेन तव तत्फलसम्बन्धानुपपत्तेः, तैश्च विमुक्तः सन् सन्न्यासयोगयुक्तात्मा सन्न्यासः कर्म्मणां मदर्पणं स एव योगस्तेन युक्त आत्मा चित्तं यस्य तथाभूतस्त्वं मां प्राप्स्यसीत्यर्थः॥ २७॥ २८॥

यदि तु भक्तेभ्य एव मोक्षं ददासि नाभक्तेभ्यस्तर्हि तवापि किं रागद्वेषादिकृतं वैषम्यमस्ति नेत्याह समोऽहमिति। सर्व्वेषु भूतेष्वहं समः, अतो मम प्रियश्च द्वेष्यश्च नास्त्येव, एवं सत्यपि ये मां भजन्ति ते भक्त्या मयि वर्त्तन्ते, अहमपि तेष्वनुग्राहकतया वर्त्ते। अयं भावः,—यथाग्नेः स्वसेवकेष्वेव तमःशीतादिदुःखमपाकुर्व्वतोऽपि न वैषम्यं, यथा वा कल्पवृक्षस्य, तथैव भक्तपक्षपातिनोऽपि मम वैषम्यं नास्त्येव, किन्तु मद्भक्तेरेवायं महिमेति॥ २९॥

साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३०

क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति।

कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।

स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२

---

अपि च भक्तेरेवायमवितर्क्यः प्रभाव इति दर्शयन्नाह अपि चेदिति। अत्यन्तदुराचारोऽपि यद्यप्यपृथक्त्वेन पृथग्देवतापि वासुदेव एवेति बुद्ध्या देवतान्तरभक्तिमकुर्व्वन् मामेव परमेश्वरं भजते, तर्हि साधुः श्रेष्ठ एव स मन्तव्यः, यतोऽसौ सम्यग्व्यवसितः शोभनमध्यवसायं कृतवान् ॥ ३० ॥

ननु कथं समीचीनाध्यवसायमात्रेण साधुर्मन्तव्यस्तत्राह क्षिप्रमिति। सुदुराचारोऽपि मां भजन् शीघ्रं धर्म्मचित्तो भवति, ततश्च शश्वच्छान्तिं चित्तोपप्लवोपरमरूपां परमेश्वरनिष्ठां नितरां गच्छति प्राप्नोति, कुतर्ककर्कशवादिनो नैतन्मन्येरन्निति शङ्काकुलमर्ज्जुनं प्रोत्साहयति हे कौन्तेय! पटहादिमहाघोषपूर्व्वकं विवदमानानां सतां गत्वा बाहुमुत्क्षिप्य निःशङ्कं प्रतिजानीहि प्रतिज्ञां कुरु, कथं मे परमेश्वरस्य भक्तः सुदुराचारोऽपि न प्रणश्यति, अपि तु कृतार्थ एव भवतीति, ततश्च ते तत्प्रौढ़िविजृम्भात् विध्वंसितकुतर्काः सन्तो निःसंशयं त्वामेव गुरुत्वेनाश्रयेरन् ॥ ३१ ॥

स्वाचारभ्रष्टं भक्तिः पवित्रीकरोतीति किमत्र चित्रं, यतो भक्तिर्दुष्कुलाननधिकारिणोऽपि संसारान्मोचयतीत्याह मां हीति। येऽपि पापयोनयः स्युर्निकृष्टजन्मानोऽन्त्यजादयो भवेयुः, येऽपि वैश्याः केवलं कृष्यादिनिरताः, अतः स्त्रियः शूद्राश्चाप्यध्ययनादिरहितास्तेऽपि मां व्यपाश्रित्य संसेव्य परां गतिं यान्ति हि निश्चितम् ॥ ३२ ॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४

इति श्रीमद्भगवद्गीतासूपनिषत्सु राजगुह्ययोगो
नाम नवमोऽध्यायः ॥ ९ ॥

---

यद्येवं तदा सत्कुलाः सदाचाराश्च मद्भक्ताः परमां गतिं यान्तीति किं वक्तव्यमित्याह किं पुनरिति । पुण्याः सुकृतिनो ब्राह्मणाः, तथा राजानश्च ते ऋषयश्चेति एवम्भूताश्च परां गतिं यान्तीति किं वक्तव्यमित्यर्थः । अतस्त्वम् इमं राजर्षिरूपं देहं प्राप्य लब्ध्वा मां भजस्व, किञ्च अनित्यमध्रुवम् असुखं सुखरहितञ्चेमं मर्त्त्यलोकं प्राप्य अनित्यत्वाद्विलम्बमकुर्व्वन् असुखत्वाच्च सुखार्थमुद्यमं हित्वा मामेव भजस्वेत्यर्थः ॥ ३३ ॥

भजनप्रकारं दर्शयन्नुपसंहरति मन्मना इति । मय्येव मनो यस्य स मन्मनास्त्वं भव, तथा ममैव भक्तः सेवको भव, मद्याजी मत्पूजनशीलो भव, मामेव च नमस्कुरु, एवमेभिः प्रकारैर्मत्परायणः सन्नात्मानं मनो मयि युक्त्वा समाधाय मामेव परमानन्दरूपमेष्यसि प्राप्स्यसि ॥ ३४ ॥

निजमैश्वर्य्यमाश्चर्य्यं भक्तेश्चाद्भुतवैभवम् ।
नवमे राजगुह्याख्ये कृपयावोचदच्युतः ॥

इति श्रीधरस्वामिकृतायां टीकायां
नवमोऽध्यायः ॥ ९ ॥

---

# दशमोऽध्यायः ।

श्रीभगवानुवाच ।

भूय एव महाबाहो शृणु मे परमं वचः ।
यत् तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १
न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणाञ्च सर्व्वशः ॥ २

---

उक्ताः संक्षेपतः पूर्व्वं सप्तमादौ विभूतयः ।
दशमे ता वितन्यन्ते सर्व्वत्रेश्वरदृष्टये ॥

एवं तावत् सप्तमादिभिस्त्रिभिरध्यायैर्भजनीयं परमेश्वरतत्त्वं निरूपितं तद्विभूतयश्च सप्तमे "रसोऽहमप्सु कौन्तेय" इत्यादिना संक्षेपतो दर्शिताः, अष्टमे च "अधियज्ञोऽहमेवात्र" इत्यादिना, नवमे च "अहं क्रतुरहं यज्ञ" इत्यादिना, इदानीं ता एव विभूतीः प्रपञ्चयिष्यन् स्वभक्तेश्चावश्यकरणीयत्वं वर्णयिष्यन् श्रीभगवानुवाच भूय एवेति । महान्तौ युद्धादिस्वधर्म्मानुष्ठाने महत्परिचर्य्यायां वा कुशलौ बाहू यस्य तथा हे महाबाहो! भूय एव पुनरपि मे वचः शृणु, कथम्भूतं परमं परमात्मनिष्ठं मद्वचनामृतेनैव प्रीतिं प्राप्नुवते तुभ्यं हितकाम्यया हितेच्छया यदहं वक्ष्यामि तत् ॥ १ ॥

उक्तस्यापि पुनर्व्वचने दुर्व्विज्ञेयत्वं हेतुमाह न मे विदुरिति । मे मम प्रकृष्टं भवं जन्मरहितस्यापि नानाविभूतिभिर्भावं सुरगणा अपि महर्षयोऽपि भृग्वादयो न जानन्ति । तत्र हेतुः अहं हि देवानां महर्षीणाञ्चादिः कारणं सर्व्वशः सर्व्वैः प्रकारैरुत्पादकत्वेन बुद्ध्यादिप्रवर्त्तकत्वेन च, अतो मदनुग्रहं विना मां कोऽपि न जानन्तीत्यर्थः ॥ २ ॥

यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम् ।
असंमूढ़ः स मर्त्त्येषु सर्व्वपापैः प्रमुच्यते ॥ ३
बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयञ्चाभयमेव च ॥ ४
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५
महर्षयः सप्त पूर्व्वे चत्वारो मनवस्तथा ।

---

एवम्भूतात्मज्ञाने फलमाह यो मामिति । सर्व्वकारणत्वादेव न विद्यते आदिः कारणं यस्य तमनादिम्, अतएवाजं जन्मशून्यं लोकानां महेश्वरञ्च मां यो वेत्ति, स मनुष्येषु सम्मोहरहितः सन् सर्व्वपापैः प्रमुच्यते ॥ ३ ॥

लोकमहेश्वरतां स्फुटयति बुद्धिरिति त्रिभिः । बुद्धिः सारासार-विवेकनैपुण्यं, ज्ञानमात्मविषयम्, असम्मोहो व्याकुलत्वाभावः, क्षमा सहिष्णुत्वं, सत्यं यथार्थभाषणं, दमो वाह्येन्द्रियसंयमः, शमोऽन्तः-करणसंयमः, सुखमनुकूलसंवेदनीयं, दुःखञ्च तद्विपरीतं, भव उद्भवः, अभावस्तद्विपरीतः, भयं त्रासः, अभयं तद्विपरीतम् । अस्य श्लोकस्य मत्त एव भवन्तीत्युत्तरेणान्वयः । किञ्च अहिंसेति । अहिंसा परपीड़ानिवृत्तिः, समता रागद्वेषादिराहित्यं, तुष्टिर्दैवलब्धेन सन्तोषः, तपः शारीरादि वक्ष्यमाणं, दानं न्यायार्ज्जितस्य धनादेः पात्रेऽर्पणं, यशः सत्कीर्त्तिः, अयशो दुष्कीर्त्तिः, एते बुद्धिज्ञानादय-स्तद्विपरीताश्चाबुद्ध्यादयो नानाविधा भावाः प्राणिनां मत्तः सकाशादेव भवन्ति ॥ ४ ॥ ५ ॥

किञ्च महर्षय इति । सप्त महर्षयो भृग्वादयः सप्त ब्राह्मणा इत्येते पुराणे निश्चयं गता इत्यादिपुराणप्रसिद्धास्तेभ्योऽपि पूर्व्वेऽन्ये

मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६
एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः ।
सोऽविकल्पेन योगेन युज्यते नात्र संशयः ॥ ७
अहं सर्व्वस्य प्रभवो मत्तः सर्व्वं प्रवर्त्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९

---

चत्वारो महर्षयः सनकादयस्तथा मनवः स्वायम्भुवादयो मद्भावा मदीयो भावः प्रभावो येषु ते हिरण्यगर्भात्मनो ममैव मनसः सङ्कल्पमात्राज्जाताः। प्रभावमेवाह येषामिति। येषां भृग्वादीनां सनकादीनाञ्च इमा ब्राह्मणाद्या लोके वर्त्तमाना यथायथं पुत्र-पौत्रादिरूपाः शिष्यप्रशिष्यादिरूपाश्च प्रजाः प्रजायन्ते ॥ ६ ॥

यथोक्तविभूत्यादितत्त्वज्ञानस्य फलमाह एतामिति। एतां भृग्वादिलक्षणां मम विभूतिं योगञ्चैश्वर्य्यलक्षणं तत्त्वतो यो वेत्ति सः अविकल्पेन निःसंशयेन योगेन सम्यग्दर्शनेन युक्तो भवति नात्र संशयः ॥ ७ ॥

यथा च विभूतियोगयोर्ज्ञाने सम्यग्ज्ञानावाप्तिस्तद्दर्शयति अह-मित्यादिचतुर्भिः। अहं सर्व्वस्य जगतः प्रभवो भृग्वादिमन्वादिरूप-विभूतिद्वारेणोत्पत्तिहेतुः, मत्त एव च सर्व्वस्य बुद्धिर्ज्ञानमसंमोह इत्यादि सर्व्वं प्रवर्त्तते, इत्येवं मत्वा अवबुध्य बुधा विवेकिनो भाव-समन्विताः प्रीतियुक्ता मां भजन्ते ॥ ८ ॥

प्रीतिपूर्व्वकं भजनमाह मच्चित्ता इति। मय्येव चित्तं येषां ते मच्चित्ताः, मामेव गताः प्राप्ताः प्राणा इन्द्रियाणि येषां ते मद्गतप्राणाः मर्पितजीवना इति वा, एवम्भूतास्ते बुधा अन्योन्यं

तेषां सततयुक्तानां भजतां प्रीतिपूर्व्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १०

तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११

अर्ज्जुन उवाच।

परं ब्रह्म परं धाम पवित्रं परमं भवान्।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२

---

मां न्यायोपेतैः श्रुत्यादिप्रमाणैर्ब्बोधयन्तो बुद्धा च मां कथयन्तः संकीर्त्तयन्तः सन्तः नित्यं तुष्यन्ति अनुमोदनेन तुष्टिं यान्ति रमन्ति च निर्व्वृतिं यान्ति ॥ ९ ॥

एवम्भूतानाञ्च सम्यग्ज्ञानमहं ददामीत्याह तेषामिति। एवं सततयुक्तानां मय्यासक्तचित्तानां प्रीतिपूर्व्वकं भजतां तं बुद्धिरूपं योगमुपायं ददामि, तमिति कम्? येनोपायेन ते मद्भक्ता मां प्राप्नुवन्ति ॥ १० ॥

बुद्धियोगं दत्त्वा च तस्यानुभवपर्य्यन्तं तमाविष्कृत्याविद्याकृतं संसारं नाशयामीत्याह तेषामिति। तेषामनुकम्पार्थमनुग्रहार्थमेवाज्ञानाज्जातं तमः संसाराख्यं नाशयामि, कुत्र स्थितः सन् केन वा साधनेन तमो नाशयसीत्यत आह आत्मभावस्थो बुद्धिवृत्तौ स्थितः सन् भास्वता विस्फुरता ज्ञानलक्षणेन दीपेन नाशयामि ॥११॥

संक्षेपेणोक्तां विभूतिं विस्तरेण जिज्ञासुर्भगवन्तं स्तुवन्नर्ज्जुन उवाच परं ब्रह्मेति सप्तभिः। परं ब्रह्म परं धाम च आश्रयः परमं पवित्रं भवानेव। कुत इत्यत आह,—यतः शाश्वतं नित्यं पुरुषं, तथा दिव्यं द्योतनात्मकं स्वयंप्रकाशम्, आदिश्चासौ देवश्चेति

आहुस्त्वामृषयः सर्व्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयञ्चैव ब्रवीषि मे ॥ १३
सर्व्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६

---

त्वं देवानामादिभूतमित्यर्थः, तथा अजम् अजन्मानं विभुञ्च व्यापकं त्वामेवाहुः। के ते इत्याह आहुरिति। ऋषयो भृग्वादयः सर्व्व, देवर्षिश्च नारदः, असितश्च देवलश्च व्यासश्च, स्वयं त्वमेव साक्षान्मे मह्यं ब्रवीषि ॥ १२ ॥ १३ ॥

अतो ममेदानीं त्वदीयैश्वर्य्येऽसम्भावना निवृत्तेत्याह सर्व्वमेतदिति। एतद्भवानेव परं ब्रह्मेत्यादि सर्व्वमपि ऋतं सत्यं मन्ये, यन्मां प्रति त्वं कथयसि "न मे विदुः सुरगणा" इत्यादि, तदपि सत्यमेव मन्ये इत्याह नहीति। हे भगवंस्तव व्यक्तिं देवा न विदुः अस्मदनुग्रहार्थमियमभिव्यक्तिरिति न जानन्ति, दानवाश्च अस्मिन् निग्रहार्थमिति न विदुरेवेति ॥ १४ ॥

किं तर्हि स्वयमिति। स्वयमेव त्वमात्मानं वेत्थ जानासि नान्यः, तदप्यात्मना स्वेनैव वेत्थ न साधनान्तरेण। अत्यादरेण बहुधा सम्बोधयति हे पुरुषोत्तम पुरुषोत्तमत्वे हेतुगर्भसम्बोधनानि हे भूतभावन भूतोत्पादक, भूतानामीश नियन्तः, देवानामादित्यादीनां देव प्रकाशक, जगत्पते विश्वपालक ॥ १५ ॥

यस्मात् तवाभिव्यक्तिं त्वमेव वेत्सि न देवादयस्तस्माद्वक्तुमिति।

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन्।
केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ॥ १७
विस्तरेणात्मनो योगं विभूतिञ्च जनार्द्दन।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८

श्रीभगवानुवाच।

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९
अहमात्मा गुड़ाकेश सर्व्वभूताशयस्थितः।

---

या आत्मनस्तव दिव्या अद्भुता विभूतयस्ताः सर्व्वा वक्तुं त्वमेवार्हसि योग्योऽसि, याभिरिति विभूतीनां विशेषणं स्पष्टार्थम् ॥ १६ ॥

कथनप्रयोजनं दर्शयन् प्रार्थयते कथमिति द्वाभ्याम्। हे योगिन् कथं कैर्विभूतिभेदैः सदा परिचिन्तयन्नहं त्वां विद्यां जानीयां विभूतिभेदेन चिन्त्योऽसि त्वं केषु केषु पदार्थेषु मया चिन्तनीयोऽसि ॥ १७ ॥

तदेवं वहिर्मुखेऽपि चित्ते तत्र तत्र विभूतिभेदेन त्वच्चिन्तैव यथा भवेत् तथा विस्तरेण कथयेत्याह विस्तरेणेति। आत्मनस्तव योगं सर्व्वज्ञत्वसर्व्वशक्तित्वादिलक्षणं योगैश्वर्य्यं विभूतिञ्च विस्तरेण पुनः कथय, यतस्तव वाक्यमस्तरूपं शृण्वतो मम तृप्तिरलंबुद्धिर्नास्ति ॥१८

एवं प्रार्थितः सन् श्रीभगवानुवाच हन्तेति। हन्तेत्यनुकम्पा-सम्बोधने, दिव्या या मद्विभूतयस्ताः प्राधान्येन तुभ्यं कथयिष्यामि, यतोऽवान्तरस्य विभूतिविस्तरस्य मदीयस्यान्तो नास्ति, अतः प्रधान-भूताः कतिचिद्वर्णयिष्यामि ॥ १६ ॥

तत्र प्रथममैश्वरं रूपं कथयति अहमिति। हे गुड़ाकेश! सर्व्वेषां भूतानामाशयेष्वन्तःकरणेषु सर्व्वज्ञत्वादिगुणैर्नियन्तृत्वेना-

अहमादिश्च मध्यञ्च भूतानामन्त एव च ॥ २०
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१
वेदानां सामवेदोऽस्मि देवानामस्मि वासवः।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२
रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम्।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३

---

वस्थितः परमात्माहम्, आदिर्जन्म, मध्यं स्थितिः, अन्तः संहारः सर्व्वभूतानां जन्मादिहेतुश्चाहमेवेत्यर्थः ॥ २० ॥

इदानीं विभूतीः कथयति आदित्यानामिति यावत्समाप्ति। आदित्यानाञ्च द्वादशादित्यानां मध्ये विष्णुनामाहं, ज्योतिषां प्रकाशकानां मध्ये अंशुमान् विश्वव्यापिरश्मियुक्तो रविः सूर्य्योऽहं, मरुतां वायूनां मध्ये मरीचिनामाहमस्मि, यद्वा सप्तमरुद्गणा देवविशेषास्तेषां मध्ये, नक्षत्राणां मध्ये चन्द्रोऽहम्। अत्र चादित्यानामहं विष्णुरित्यादिषु प्रायशो निर्द्धारणे षष्ठी, क्वचिच्च भूतानामस्मि चेतनेत्यादिषु सम्बन्धे षष्ठी, तच्च तत्रैव दर्शयिष्यामः, विष्णुरित्यादिष्ववतारोऽपि प्रभावातिशयमात्रविवक्षया विभूतित्वेन निर्द्दिश्यते, अतः पश्चाध्यायस्य स्पष्टार्थत्वेऽपि क्वचित् किञ्चिद्व्याख्यास्यामः ॥२१

वेदानामिति। वासव इन्द्रः, भूतानां सम्बन्धिनी चेतना ज्ञानशक्तिरहमस्मि ॥ २२ ॥

रुद्राणामिति। रक्षसामपि क्रूरत्वादिसाम्याद्यक्षैः सहैकीकृत्य निर्द्देशः, तेषां मध्ये वित्तेशः कुबेरोऽस्मि, पावकोऽग्निः, शिखरिणां शिखरवतामुच्छ्रितानां मध्ये मेरुः ॥ २३ ॥

पुरोधसाञ्च मुख्यं मां विद्धि पार्थ वृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५

अश्वत्थः सर्व्ववृक्षाणां देवर्षीणाञ्च नारदः ।
गन्धर्व्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणाञ्च नराधिपम् ॥ २७

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८

---

पुरोधसामिति । पुरोधसां मध्ये देवपुरोहितत्वान्मुख्यं वृहस्पतिं मां विद्धि, सेनानीनां सेनापतीनां मध्ये देवसेनापतिः स्कन्दोऽहमस्मि, सरसां स्थिरजलाशयानां मध्ये समुद्रोऽस्मि ॥ २४ ॥

महर्षीणामिति । गिरां वाचां पदात्मिकानां मध्ये एकमक्षरमोङ्काराख्यं पदमस्मि ॥ २५ ॥

अश्वत्थ इति । देवा एव सन्तो ये मन्त्रदर्शनेन ऋषित्वं प्राप्तास्तेषां मध्ये नारदोऽस्मि, सिद्धानामुत्पत्तित एवाधिगतपरमार्थतत्त्वानां मध्ये कपिलाख्योमुनिरस्मि ॥ २६ ॥

उच्चैःश्रवसमिति । अमृतार्थं क्षीरोदधिमथनादुद्भूतम् उच्चैःश्रवसनामाश्वं मद्विभूतिं विद्धि, अमृतोद्भवमित्येतदैरावतेऽपि संबध्यते, नराधिपं राजानं मां विद्धि ॥ २७ ॥

आयुधानामिति । कामान् दोग्धीति कामधुक्, प्रजनः प्रजोत्पत्तिहेतुः कन्दर्पः कामोऽस्मि न केवलं सम्भोगमात्रप्रधानः कामो मद्विभूतिरशास्त्रीयत्वात्, सर्पाणां सविषाणां राजा वासुकिरस्मि ॥२८

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्य्यमा चास्मि यमः संयमतामहम् ॥ २९

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३०

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१

सर्गाणामादिरन्तश्च मध्यञ्चैवाहमर्ज्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२

---

अनन्त इति । नागानां निर्व्विषाणां राजा अनन्तः शेषोऽस्मि, यादसां जलचराणां मध्ये राजा वरुणोऽस्मि, पितॄणां राजा अर्य्यमास्मि, संयमतां नियमं कुर्व्वतां मध्ये यमोऽस्मि ॥ २९ ॥

प्रह्लाद इति । कलयतां वशीकुर्व्वतां गणयतां वा मध्ये कालोऽहमस्मि, मृगेन्द्रः सिंहः, पक्षिणां मध्ये गरुड़ोऽस्मि ॥ ३० ॥

पवन इति । पवतां पावयितॄणां वेगवतां वा मध्ये वायुरहमस्मि, रामो दाशरथिः, झषाणां मत्स्यानां मध्ये मकरनामा मत्स्यजातिविशेषोऽहं, स्रोतसां प्रवाहोदकानां मध्ये भागीरथी ॥३१

सर्गाणामिति । सृज्यन्त इति सर्गा आकाशादयस्तेषामादिरन्तश्च मध्यञ्चैवाहम्, "अहमादिश्च मध्यञ्च" इत्यत्र सृष्ट्यादिकर्तृत्वं पारमैश्वर्य्यमुक्तम्, अत्र ते सृष्टिस्थितिप्रलया मद्विभूतित्वेन ध्येया इत्युच्यत इति विशेषः। अध्यात्मविद्या आत्मविद्या, प्रवदतां वादिनां सम्बन्धिन्यो वादजल्पवितण्डाख्यास्तिस्रः कथाः प्रसिद्धास्तासां मध्ये वादोऽहं,—यत्र द्वाभ्यामपि प्रमाणतस्तर्कतश्च स्वपक्षः स्थाप्यते परपक्षश्छलजातिनिग्रहस्थानैर्दूष्यते स जल्पो नाम ; यत्र त्वेकः स्वपक्षं स्थापयति अन्यस्तु छलजातिनिग्रहस्थानैस्तत्पक्षं

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः॥ ३३
मृत्युः सर्व्वहरश्चाहमुद्भवश्च भविष्यताम्।
कीर्त्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा॥३४
बृहत्साम तथा साम्नां गायत्री छन्दसामहम्।

---

दूषयति न तु स्वपक्षं स्थापयति सा वितण्डा नाम कथा, तत्र जल्पवितण्डे विजिगीषमाणयोर्वादिनोः प्रज्ञापरीक्षामात्रफले; वादस्तु वीतरागयोः शिष्याचार्य्ययोरन्ययोर्वा तत्त्वनिरूपणफलः, अतोऽसौ श्रेष्ठत्वान्मद्विभूतिरित्यर्थः॥ ३२॥

अक्षराणामिति। अक्षराणां वर्णानां मध्ये अकारोऽस्मि तस्य सर्व्ववाङ्मयत्वेन श्रेष्ठत्वात्, तथा च श्रुतिः,—"अकारो वै सर्व्वा वाक् सैष स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति स्तूयत इति श्रैष्ठ्यं, समाससमूहस्य मध्ये द्वन्द्वः रामकृष्णावित्यादिसमासोऽस्मि उभयपदप्रधानत्वेन श्रेष्ठत्वात्, अक्षयः प्रवाहरूपः कालोऽहमस्मि "कालः कलयतामहम्" इत्यत्रायुर्गणनात्मकः संवत्सरप्रताद्यायुःस्वरूपः काल उक्तः, स च तस्मिन्नायुषि क्षीणे सति क्षीयते, अत्र तु प्रवाहात्मकोऽक्षयः काल उच्यत इति विशेषः, कर्म्मफलविधातॄणां मध्ये विश्वतोमुखो धाता सर्व्वकर्म्मफलविधाताहमित्यर्थः॥३३

मृत्युरिति। संहारकाणां मध्ये सर्व्वहरो मृत्युरहं, भविष्यतां भाविकल्याणानां प्राणिनामुद्भवोऽभ्युदयोऽहं, नारीणां मध्ये कीर्त्त्याद्याः सप्त देवतारूपाः स्त्रियोऽहं यासामाभासमात्रयोगेण प्राणिनः श्लाघ्या भवन्तीति ताः कीर्त्त्याद्याः स्त्रियो मद्विभूतयः॥ ३४॥

बृहदिति। "त्वां इन्द्र हवामहे" इत्यस्यामृचि गीयमानं बृहत्सामाहं तेन चेन्द्रः सर्व्वेश्वरत्वेन स्तूयते इति श्रैष्ठ्यं, छन्दो-

मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५
द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७
दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८
यच्चापि सर्व्वभूतानां वीजं तदहमर्ज्जुन ।
न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ॥ ३९

---

विशिष्टानां मन्त्राणां मध्ये गायत्रीमन्त्रोऽहं द्विजत्वापादकत्वेन सोमाहरणेन च श्रेष्ठत्वात्, कुसुमाकरो वसन्तः ॥ ३५ ॥

द्यूतमिति । छलयतामन्योन्यवञ्चनपराणां सम्बन्धि द्यूतमस्मि, तेजस्विनां प्रभाववतां तेजः प्रभावोऽस्मि, जेतॄणां जयोऽस्मि, व्यवसायिनामुद्यमवतां व्यवसाय उद्यमोऽस्मि, सत्त्ववतां सात्त्विकानां सत्त्वमहम् ॥ ३६ ॥

वृष्णीनामिति । वासुदेवो योऽहं त्वामुपदिशामि, धनञ्जयस्त्वमेव मद्विभूतिः, मुनीनां वेदार्थमननशीलानां वेदव्यासोऽस्मि, कवीनां शास्त्रदर्शिनामुशना नाम कविः शुक्रः ॥ ३७ ॥

दण्ड इति । दमयतां दमनकर्त्तॄणां सम्बन्धी दण्डोऽस्मि येनासंयता अपि संयता भवन्ति स दण्डो मद्विभूतिः, जेतुमिच्छतां सम्बन्धिनी सामाद्युपायरूपा नीतिरस्मि, गुह्यानां गोप्यानां गोपनहेतुर्मौनवचनमस्मि, नहि तूष्णीं स्थितस्याभिप्रायो ज्ञायते, ज्ञानवतां तत्त्वज्ञानिनां यत् ज्ञानं तदहमस्मि ॥ ३८ ॥

यच्चापीति । यदपि सर्व्वभूतानां वीजं प्ररोहकारणं तदहं,

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४०
यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥ ४१
अथवा बहुनैतेन किं ज्ञातेन तवार्ज्जुन।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२

इति श्रीमद्भगवद्गीतासूपनिषत्सु विभूतियोगो
नाम दशमोऽध्यायः ॥ १० ॥

---

तत्र हेतुः मया विना यत् स्यात् भवेत् तच्चरमचरं वा भूतं नास्त्येवेति ॥ ३९ ॥

प्रकरणार्थमुपसंहरति नान्तोऽस्तीति। अनन्तत्वाद्विभूतीनां ताः साकल्येन वक्तुं न शक्यन्ते, एष तु विभूतिविस्तर उद्देशतः संक्षेपतः प्रोक्तः ॥ ४० ॥

पुनश्च साकाङ्क्षं प्रति कथञ्चित् साकल्येन कथयति यद्यदिति। विभूतिमदैश्वर्य्ययुक्तं, श्रीमत् सम्पत्तियुक्तम्, ऊर्ज्जितं केनापि प्रभावबलादिना गुणेनातिशयितं यद्यत् सर्व्वं वस्तुमात्रं भवेत् तत्तदेव मम तेजसः प्रभावस्यांशेन सम्भूतं जानीहि ॥ ४१ ॥

अथवा किमेतेन परिच्छिन्नविभूतिदर्शनेन सर्व्वत्र समदृष्टिमेव कुर्व्वित्याह अथवेति। बहुना पृथग्ज्ञातेन किं तव कार्य्यं, यस्मादिदं सर्व्वं जगदेकांशेनैकदेशमात्रेण विष्टभ्य धृत्वा व्याप्येति वा अहमेवावस्थितः न मद्व्यतिरिक्तं किञ्चिदस्ति "पादोऽस्य विश्वाभूतानि" इति श्रुतेः ॥ ४२ ॥

इन्द्रियद्वारतश्चित्ते बहिर्धावति सर्व्वपि।
ईशदृष्टिविधानाय विभूतीर्दशमेऽब्रवीत् ॥

इति श्रीधरस्वामिकृतायां टीकायां दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः।

अर्ज्जुन उवाच।

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम्।
यत् त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम॥ १

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम्॥ २

---

विभूतेर्वैभवं प्रोच्य कृपया परया हरिः।
दिदृक्षोरर्ज्जुनस्याथ विश्वरूपमदर्शयत्॥

पूर्व्वाध्यायान्ते "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितोजगत्" इति विश्वात्मकं पारमेश्वररूपमुपक्षिप्तं, तद्दिदृक्षुः पूर्व्वोक्तमभिनन्दन्नर्ज्जुन उवाच मदनुग्रहायेति चतुर्भिः। ममानुग्रहाय शोकनिवृत्तये परमं परमात्मनिष्ठं गुह्यं गोप्यमपि अध्यात्मसंज्ञितमात्मानात्मविवेकविषयं यत् त्वयोक्तं वचः "अशोच्यानन्वशोचस्त्वम्" इत्यादि षष्ठाध्यायपर्य्यन्तं यद्वाक्यं, तेन ममायं मोहोऽहं हन्ता, एते हन्यन्ते इत्यादिलक्षणभ्रमो विगतो विनष्ट आत्मनः कर्त्तृत्वाद्यभावोक्तेः॥ १॥

किञ्च भवेति। भूतानां भवाप्ययौ सृष्टिप्रलयौ त्वत्तः सकाशादेव भवत इति श्रुतं मया "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" इत्यादौ विस्तरशः पुनःपुनः कमलस्य पत्रे इव सुप्रसन्ने विशाले अक्षिणी यस्य तव हे कमलपत्राक्ष महात्म्यमपि चाव्ययं अक्षयं श्रुतं विश्वसृष्ट्यादिकर्त्तृत्वेऽपि शुभाशुभकर्म्मकारयितृत्वेऽपि बन्धमोक्षादिविचित्रफलदातृत्वेऽपि अविकारावैषम्यासङ्गौदासीन्यादिलक्षणमपरि-

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४

श्रीभगवानुवाच।

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५

---

मितं महत्त्वञ्च श्रुतम् "अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धय" इति, "मया ततमिदं सर्व्वमिति, न च मां तानि कर्म्माणीति, समोऽहं सर्व्वभूतेषु" इत्यादिना च, अतस्त्वत्परतन्त्राणामपि जीवानामहं कर्त्तृत्यादि मदीयो मोहो विगत इति भावः ॥ २ ॥

किञ्च एवमेतदिति। "भवाप्ययौ हि भूतानाम्" इत्यादि मया श्रुतं यथा चेदानीमात्मानं त्वमात्थ "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इत्येवं कथयसि हे परमेश्वर एतदेवमेव अत्राप्य-विश्वासो मम नास्ति, तथापि हे पुरुषोत्तम तवैश्वर्य्यं ज्ञानैश्वर्य्य-शक्तिवीर्य्यादिभिः सम्पन्नं तद्रूतं कौतूहलादहं द्रष्टुमिच्छामि ॥ ३ ॥

नचाहं द्रष्टुमिच्छामीत्येतावतैव त्वया तद्रूपं दर्शयितव्यं किं तर्हि मन्यस इति। योगिन एव योगास्तेषामीश्वर, मयार्ज्जुनेन तद्रूपं द्रष्टुं शक्यमिति यदि मन्यसे, ततस्तर्हि तद्रूपं परमात्मानमव्ययं नित्यं मम दर्शय ॥ ४ ॥

एवं प्रार्थितः सन्नत्यद्भुतं रूपं दर्शयिष्यन् सावधानो भवेत्येवमभि-मुखीकरोति श्रीभगवानुवाच पश्येति चतुर्भिः। रूपस्यैकत्वेऽपि नानाविधत्वाद्रूपाणीति बहुवचनम्, अपरिमितानि अनेकप्रकाराणि दिव्यान्यलौकिकानि मम रूपाणि पश्य, वर्णाः शुक्लकृष्णादयः

पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा।
बहून्यदृष्टपूर्व्वाणि पश्याश्चर्य्याणि भारत ॥ ६

इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम्।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८

सञ्जय उवाच।

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः।

---

आकृतयः अवयवविशेषाः नाना अनेका वर्णा आकृतयश्च येषां तानि नानावर्णाकृतीनि ॥ ५ ॥

तान्येवाह पश्येति। आदित्यादीन् मम देहे पश्य, मरुत एकोनपञ्चाशद्देवताविशेषान्, अदृष्टपूर्व्वाणि त्वया चान्येन वा पूर्व्वमदृष्टानि रूपाणि ॥ ६ ॥

किञ्च इहैकस्थमिति। तत्र तत्र परिभ्रमता वर्षकोटिभिरपि द्रष्टुमशक्यं कृत्स्नमपि चराचरसहितं जगदिहास्मिन् मम देहेऽवयवरूपेणैकत्र स्थितमद्याधुनैव पश्य, यच्चान्यज्जगदाश्रयभूतं कारणस्वरूपं जगतश्चावस्थाविशेषादिकं जयपराजयादिकञ्च यच्च यदप्यन्यद्द्रष्टुमिच्छसि तत् सर्व्वं पश्य ॥ ७ ॥

यदुक्तमर्ज्जुनेन "मन्यसे यदि तच्छक्यम्" इति तत्राह न तु मामिति। अनेनैव तु स्वीयेन चर्म्मचक्षुषा मां द्रष्टुं न शक्यसे शक्तो न भविष्यसि अतो दिव्यमलौकिकं ज्ञानात्मकं चक्षुस्तुभ्यं ददामि ममैश्वरमसाधारणं योगं युक्तिमघटनघटनासामर्थ्यं पश्य ॥ ८ ॥

एवमुक्त्वा भगवानर्ज्जुनाय स्वरूपं दर्शितवांस्तच्च रूपं दृष्ट्वार्ज्जुनः

दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १०

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्।
सर्व्वाश्चर्य्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११

दिवि सूर्य्यसहस्रस्य भवेद्युगपदुत्थिता।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा।

---

श्रीकृष्णं विज्ञापितवानितीममर्थं षड्भिः श्लोकैर्धृतराष्ट्रं प्रति सञ्जय उवाच एवमुक्तेति। हे राजन् धृतराष्ट्र महांश्चासौ योगेश्वरश्च हरिः परममैश्वरं रूपं दर्शितवान् ॥ ९ ॥

कथम्भूतं तदित्यत आह अनेकवक्त्रनयनमिति। अनेकानि वक्त्राणि नयनानि च यस्मिंस्तत्, अनेकानामद्भुतानां दर्शनं यस्मिंस्तत्, अनेकानि दिव्याभरणानि यस्मिंस्तत्, दिव्यान्यनेकान्युद्यतान्यायुधानि यस्मिंस्तत्। किञ्च दिव्येति। दिव्यानि माल्यान्यम्बराणि च धारयतीति तत्, तथा दिव्यो गन्धो यस्य तादृशमनुलेपनं यस्य तत्, सर्व्वाश्चर्य्यमयमनेकाश्चर्य्यप्रायं, देवं द्योतनात्मकम्, अनन्तमपरिच्छिन्नं, विश्वतः सर्व्वतोमुखानि यस्मिंस्तत् ॥ १० ॥ ११ ॥

विश्वरूपदीप्तेर्निरुपमत्वमाह दिवि सूर्य्येति। दिवि आकाशे सूर्य्यसहस्रस्य युगपदुत्थितस्य यदि युगपदुत्थिता भाः प्रभा भवेत् तर्हि सा महात्मनो विश्वरूपस्य भासः प्रभायाः कथञ्चित् सदृशी स्यात् अन्योपमा नास्त्येवेत्यर्थः, तथाभूतं रूपं दर्शयामासेति पूर्व्वेणैवान्वयः ॥ १२ ॥

ततः किं वृत्तमित्यपेक्षायामाह तत्रेति। अनेकधा प्रविभक्तं

अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३

ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४

अर्ज्जुन उवाच।

पश्यामि देवांस्तव देव देहे
सर्व्वांस्तथा भूतविशेषसङ्घान्।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्व्वानुरगांश्च दिव्यान् ॥ १५
अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्व्वतोऽनन्तरूपम्।

---

नानाविभागेनावस्थितं कृत्स्नं जगद्देवदेवस्य शरीरे तदवयवत्वेनैकत्र व्यवस्थितं तदा पाण्डवोऽर्ज्जुनोऽपश्यत् ॥ १३ ॥

एवं दृष्ट्वा किं कृतवानित्यत्राह तत इति। ततो दर्शनानन्तरं विस्मयेनाविष्टो व्याप्तः सन् हृष्टान्युत्पुलकितानि रोमाणि यस्य स धनञ्जयस्तमेव देवं शिरसा प्रणम्य कृताञ्जलिः सम्पुटीकृतहस्तो भूत्वा अभाषतोक्तवान् ॥ १४ ॥

भाषणमेवाह पश्यामीति सप्तदशभिः। हे देव तव देहे देवानादित्यादीन् पश्यामि तथा सर्व्वान् भूतविशेषाणां जरायुजाण्डजादीनां संघांश्च तथा दिव्यानृषीन् उरगांश्च तक्षकादीन् तथा तेषां देवादीनामीशं स्वामिनं ब्रह्माणञ्च कथम्भूतं कमलासनस्थं पृथिवीपद्मकर्णिकायां मेरौ स्थितमित्यर्थः, यद्वा त्वन्नाभिपद्मासनस्थमिति ॥ १५ ॥

किञ्च अनेकेति। अनेकानि बाह्वादीनि यस्य तादृशं त्वां

नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६
किरीटिनं गदिनं चक्रिणञ्च
तेजोराशिं सर्व्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्-
दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७
त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्म्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८
अनादिमध्यान्तमनन्तवीर्य्य-
मनन्तबाहुं शशिसूर्य्यनेत्रम् ।

---

पश्यामि, अनन्तानि रूपाणि यस्य तं त्वां सर्व्वतः पश्यामि, तव तु अन्तं मध्यमादिञ्च न पश्यामि सर्व्वगतत्वात् ॥ १६ ॥

किञ्च किरीटिनमिति । मुकुटवन्तं चक्रवन्तं सर्व्वतो दीप्तिमन्तं तेजःपुञ्जरूपं तथा दुर्निरीक्ष्यं द्रष्टुमशक्यं तत्र हेतुः दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिर्यस्य तम् अतएवाप्रमेयम् एवम्भूत इति निश्चेतुमशक्यं त्वां समन्ततः पश्यामि ॥ १७ ॥

यस्मादेवं तवातर्क्यमैश्वर्य्यं तस्मात् त्वमिति । त्वमेव अक्षरं परमं परं ब्रह्म, कथम्भूतं वेदितव्यं मुमुक्षुभिर्ज्ञातव्यं, त्वमेवास्य विश्वस्य परं निधानं निधीयतेऽस्मिन्निति निधानं प्रकृष्टाश्रयः, अतएव त्वमव्ययो नित्यः, शाश्वतस्य नित्यस्य धर्म्मस्य गोप्ता पालकः, सनातनश्चिरन्तनः पुरुषो मतो मे सम्मतोऽसि ॥ १८ ॥

किञ्च अनादीति । अनादिमध्यान्तम् उत्पत्तिस्थितिलयरहितम्,

पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्व्वाः।
दृष्ट्वाद्भुतं रूपमिदं तवोग्रं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २०

अमी हि त्वां सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।

---

अनन्तं वीर्य्यं प्रभावो यस्य तम्, अनन्ता बाहवो यस्य तं, शशिसूर्य्यौ नेत्रे यस्य तादृशं पश्यामि, तथा दीप्तो हुताशोऽग्निर्वक्त्रेषु यस्य तं स्वतेजसा इदं विश्वं तपन्तं सन्तापयन्तं पश्यामि ॥ १९ ॥

किञ्च द्यावापृथिव्योरिति। द्यावापृथिव्योरिदमन्तरमन्तरीक्षं त्वयैवैकेन व्याप्तं दिशश्च सर्व्वा व्याप्ताः अद्भुतमदृष्टपूर्व्वं त्वदीयमिदमुग्रं घोरं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितमतिभीतं पश्यामीति पूर्व्वस्यैवानुषङ्गः ॥ २० ॥

किञ्च अमी हीति। अमी सुरसङ्घा भीताः सन्तस्त्वां विशन्ति शरणं प्रविशन्ति, तेषां मध्ये केचिदतिभीता दूरत एव स्थित्वा कृतसम्पुटकरयुगलाः सन्तो गृणन्ति जय रक्ष रक्षेति प्रार्थयन्ते स्पष्टमन्यत् ॥ २१ ॥

किञ्च रुद्रेति। रुद्राश्च आदित्याश्च वसवश्च ये च साध्या

गन्धर्व्वयक्षासुरसिद्धसङ्घा
वीक्षन्ते त्वां विस्मिताश्चैव सर्व्वे॥ २२
रूपं महत् ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम्।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम्॥ २३
नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम्।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमञ्च विष्णो॥ २४

---

नाम देवाः विश्वे विश्वेदेवाः अश्विनौ देवौ मरुतो मरुद्गणाश्च ऊष्माणं पिबन्तीत्यूष्मपाः पितरः। "ऊष्मभागा हि पितरः" इति श्रुतेः, स्मृतिश्च "यावदुष्णं भवेदन्नं तावदश्नन्ति वाग्यताः। तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः"। गन्धर्व्वाश्च यक्षाश्च असुराश्च विरोचनादयः सिद्धसंङ्घाः सिद्धानां सङ्घाश्च सर्व्वे एव विस्मिताः सन्तस्त्वां वीक्षन्त इत्यन्वयः॥ २२॥

किञ्च रूपमिति। हे महाबाहो महदत्यूर्ज्जितं तव रूपं दृष्ट्वा लोकाः सर्व्वे प्रव्यथिता अतिभीताः, तथाहञ्च प्रव्यथितोऽस्मि, कीदृशं रूपं दृष्ट्वा, बहूनि वक्त्राणि नेत्राणि च यस्मिंस्तत्, बहवो बाहव ऊरवः पादाश्च यस्मिंस्तत्, बहून्युदराणि यस्मिंस्तत्, बह्वीभिर्दंष्ट्राभिः करालं विकृतं रौद्रमित्यर्थः॥ २३॥

न केवलं भीतोऽहमेतावदेव अपि तु नभ इति। नभः स्पृशतीति नभःस्पृक् तम् अन्तरीक्षव्यापिनमित्यर्थः, दीप्तं तेजोयुक्तम्, अनेके वर्णा यस्य तं, व्यात्तानि विवृतान्याननानि यस्य तं, दीप्तानि

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म्म
प्रसीद देवेश जगन्निवास ॥ २५
अमी च त्वां धृतराष्ट्रस्य पुत्त्राः
सर्व्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्त्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६
वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।

---

विशालानि नेत्राणि यस्य तम्, एवम्भूतं हि त्वां दृष्ट्वा प्रव्यथितोऽन्तरात्मा मनो यस्य सोऽहं धृतिं धैर्य्यमुपशमञ्च न लभे ॥ २४ ॥

किञ्च दंष्ट्रेति । हे देवेश तव मुखानि दृष्ट्वा भयावेशेन दिशो न जानामि, शर्म्म च सुखं न लभे, भो जगन्निवास प्रसन्नो भव कीदृशानि मुखानि दृष्ट्वा—दंष्ट्राभिः करालानि कालानलः प्रलयाग्निस्तत्सदृशानि ॥ २५ ॥

यच्चान्यद्द्रष्टुमिच्छसीत्यनेनास्मिन् संग्रामे भाविजयपराजयादिकं मम देहे पश्येति यद्भगवतोक्तं तदिदानीं पश्यन्नाह अमी चेति पञ्चभिः । अमी धृतराष्ट्रस्य पुत्त्राः दुर्य्योधनादयः सर्व्वेऽवनिपालानां जयद्रथादीनां राज्ञां सङ्घैः समूहैः सहैव तव वक्त्राणि विशन्तीत्युत्तरेणान्वयः । तथा भीष्मश्च द्रोणश्चासौ सूतपुत्त्रश्च कर्णः, न केवलं त एव विशन्ति अपि तु प्रतियोद्धारोऽस्मदीया ये योधमुख्याः शिखण्डिधृष्टद्युम्नादयस्तैः सह वक्त्राणीति । एते सर्व्वे त्वरमाणा

केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभितो ज्वलन्ति ॥ २८

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९

लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।

---

यावन्तस्तव दंष्ट्राभिः विकृतानि करालानि भयङ्कराणि वक्त्राणि विशन्ति, तेषां मध्ये केचित् चूर्णितैरुत्तमाङ्गैः शिरोभिरुपलक्षिता दन्तसन्धिषु संश्लिष्टाः संदृश्यन्ते ॥ २६ ॥ २७ ॥

प्रवेशने दृष्टान्तमाह यथेति । नदीनामनेकमार्गप्रवृत्तानां बहवोऽम्बूनां वेगाः प्रवाहाः समुद्राभिमुखाः सन्तो यथा समुद्रमेव द्रवन्ति विशन्ति तथा अमी ये नरलोकवीरास्तेऽभितो ज्वलन्ति सर्व्वतः प्रदीप्यमानानि तव वक्त्राणि प्रविशन्ति ॥ २८ ॥

अवशत्वेन प्रवेशे नदीवेगदृष्टान्त उक्तो बुद्धिपूर्व्वकप्रवेशे दृष्टान्तमाह यथेति । प्रदीप्तं ज्वलन्तमग्निं पतङ्गाः शलभाः बुद्धिपूर्व्वकं समृद्धो वेगो येषां ते यथा नाशाय मरणायैव विशन्ति, तथैव लोका एते जना अपि भवन्मुखानि प्रविशन्ति ॥ २९ ॥

ततः किमत आह लेलिह्यस इति । ग्रसमानोऽपि सन्

तेजोभिरापूर्य्य जगत् समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३०
आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१

श्रीभगवानुवाच ।

कालोऽस्मि लोकक्षयकृत् प्रवृद्धो
लोकान् समाहर्त्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्व्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२

---

समग्रान् लोकान् सर्व्वानेतान् वीरान् सर्व्वतो लेलिह्यसे अतिशयेन भक्षयसि, कैः ज्वलद्भिर्वदनैः, किञ्च हे विष्णो तव भासो दीप्तयस्तेजोभिर्विस्फुरणैः समग्रं जगदाप्य तीव्राः सत्यः प्रतपन्ति सन्तापयन्ति ॥ ३० ॥

यत एवं तस्मात् आख्याहीति । भवानुग्ररूपः क इत्याख्याहि कथय, तुभ्यं नमोऽस्तु हे देववर प्रसीद प्रसन्नो भव। भवन्तमाद्यं पुरुषं विशेषेण ज्ञातुमिच्छामि, यतस्तव प्रवृत्तिं चेष्टां किमर्थमेवं प्रवृत्तोऽसीति न जानामि, एवम्भूतस्य तव प्रवृत्तिं वार्त्तामपि न जानामीति वा ॥ ३१ ॥

एवं प्रार्थितः सन् श्रीभगवानुवाच काल इति त्रिभिः। लोकानां क्षयकर्त्ता प्रवृद्धोऽत्युत्कटः कालोऽस्मि लोकान् प्राणिनः संहर्त्तुमिह लोके प्रवृत्तोऽस्मि, अत ऋते त्वां हन्तारं विना न

तस्मात् त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम्।
मयैवैते निहताः पूर्व्वमेव
निमित्तमात्रं भव सव्यसाचिन्॥ ३३
द्रोणञ्च भीष्मञ्च जयद्रथञ्च
कर्णं तथान्यानपि योधवीरान्।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान्॥ ३४

सञ्जय उवाच।

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी।

---

भविष्यन्ति जीविष्यन्ति, के ते, प्रत्यनीकेषु अनीकानि प्रति भीष्म-द्रोणादीनां सर्व्वासु सेनासु ये योद्धारोऽवस्थितास्ते सर्व्वेऽपि॥ ३२॥

यस्मादेवं तस्मादिति तस्मात् त्वं युद्धायोत्तिष्ठ देवैरपि दुर्ज्जया भीष्मादयोऽर्ज्जुनेन निर्ज्जिता इत्येवम्भूतं यशो लभस्व प्राप्नुहि, अयत्न-तश्च शत्रून् जित्वा समृद्धं राज्यं भुङ्क्ष्व, एते च तव शत्रवस्त्वदीययुद्धात् पूर्व्वमेव मयैव कालात्मना निहतप्रायास्तथापि त्वं निमित्तमात्रं भव, हे सव्यसाचिन् सव्येन वामेन हस्तेन सचितुं शरान् सन्धातुं शीलं यस्येति व्युत्पत्त्या वामेनापि बाणक्षेपात् सव्यसाचीत्युच्यते॥ ३३॥

"न चैतद्विद्मः कतरन्नोगरीयो यद्वा जयेम यदि वा नो जयेयुः" इति या आशङ्का सापि न कार्य्येत्याह द्रोणमिति। येभ्यस्त्वं शङ्कसे तान् द्रोणादीन् मयैव हतांस्त्वं जहि घातय, मा व्यथिष्ठा भयं मा कार्षीः, सपत्नान् शत्रून् रणे युद्धे निश्चितं जेतासि जेष्यसि॥ ३४॥

ततो यद्वृत्तं तदेव धृतराष्ट्रं प्रति सञ्जय उवाच एतदिति।

नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३५

अर्ज्जुन उवाच।

स्थाने हृषीकेश तव प्रकीर्त्त्या
जगत् प्रहृष्यत्यनुरज्यते च।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्व्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६

कस्माच्च ते न नमेरन् महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्त्रे।

---

एतत् पूर्व्वोक्तश्लोकत्रयात्मकं केशवस्य वचनं श्रुत्वा वेपमानः कम्पमानः किरीटी अर्ज्जुनः कृताञ्जलिः सम्पुटीकृतहस्तः कृष्णं नमस्कृत्य पुनरप्याह उक्तवान्, कथमाह, भयहर्षाद्यावेशवशात् गद्गदेन कण्ठकम्पेन सह वर्त्तत इति सगद्गदं यथा स्यात् तथा, किञ्च भीतादपि भीतः सन् प्रणम्य अवनतो भूत्वा आह ॥ ३५ ॥

स्थाने इत्येकादशभिरर्ज्जुनोक्तिः। स्थाने इत्यव्ययं युक्तमित्यस्मिन्नर्थे, हे हृषीकेश यत एवं त्वमद्भुतप्रभावो भक्तवत्सलश्चातस्तव प्रकीर्त्त्या माहात्म्यसंकीर्त्तनेन न केवलमहमेव प्रहृष्यामीति किन्तु जगत् सर्व्वं प्रहृष्यति प्रकर्षेण हर्षं प्राप्नोति एतत् स्थाने युक्तमित्यर्थः, तथा जगदनुरज्यते च अनुरागमुपैति इति यत्, तथा रक्षांसि भीतानि सन्ति दिशः प्रति द्रवन्ति पलायन्ते इति यत्, सर्व्वे योगतपोमन्त्रादिसिद्धानां सङ्घा नमस्यन्ति प्रणमन्तीति यत् एतच्च स्थाने युक्तमेव न चित्रमित्यर्थः ॥ ३६ ॥

अत्र हेतुमाह कस्मादिति। हे अनन्त हे देवेश हे महात्मन् हे जगन्निवास कस्माद्धेतोस्ते तुभ्यं न नमेरन् न

अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत् तत्परं यत् ॥ ३७
त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम्।
वेत्तासि वेद्यञ्च परञ्च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३८
वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९

---

नमस्कुर्युः, कथम्भूताय ब्रह्मणोऽपि गरीयसे गुरुतराय आदिकर्त्रे च ब्रह्मणोऽपि जनकाय, किञ्च सदात्मकम्, असदव्यक्तञ्च ताभ्यां परं मूलकारणं यदक्षरं ब्रह्म तच्च त्वमेव, एतैर्नवभिर्हेतुभिस्त्वां सर्व्वे नमस्यन्तीति न चित्रमित्यर्थः ॥ ३७ ॥

किञ्च त्वमादिदेव इति। त्वम् आदिदेवो देवानामादिः यतः पुराणोऽनादिः पुरुषस्त्वम् अतएव त्वमस्य विश्वस्य परं निधानं लयस्थानं तथा विश्वस्य वेत्ता ज्ञाता त्वं, यच्च वेद्यं वस्तुजातं परञ्च धाम वैष्णवं परं तदपि त्वमेवासि, अतएव हे अनन्तरूप त्वयैवेदं विश्वं ततं व्याप्तम्, एतैश्च सप्तभिर्हेतुभिस्त्वमेव नमस्कार्य्य इत्यर्थः ॥३८

इतश्च सर्व्वैस्त्वमेव नमस्कार्य्यः सर्व्वदेवात्मकत्वादिति स्तुवन् स्वयमपि नमस्करोति वायुरिति। वाय्वादिरूपस्त्वमिति सर्व्वदेवात्मकत्वोपलक्षणार्थमुक्तं, प्रजापतिः पितामहस्तस्यापि जनकत्वात् प्रपितामहस्त्वम् अतस्ते तुभ्यं सहस्रशो नमोऽस्तु पुनः सहस्रकृत्वो नमोऽस्तु भूयोऽपि पुनरपि सहस्रकृत्वो नमो नम इति ॥ ३९ ॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्व्वत एव सर्व्व।
अनन्तवीर्य्यामितविक्रमस्त्वं
सर्व्वं समाप्नोषि ततोऽसि सर्व्वः॥ ४०

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि॥ ४१

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु।
एकोऽथवाप्यच्युत तत्समक्षं
तत् क्षामये त्वामहमप्रमेयम्॥ ४२

---

भक्तिश्रद्धाद्यादरातिशयेन नमस्कारेषु तृप्तिमनधिगच्छन् पुनरपि बहुशः प्रणमति नम इति। हे सर्व्व सर्व्वात्मन् सर्व्वासु दिक्षु तुभ्यं नमोऽस्तु, सर्व्वात्मत्वमुपपादयन्नाह अनन्तं वीर्य्यं सामर्थ्यं यस्य तथा अमितो विक्रमः पराक्रमो यस्य स एवम्भूतस्त्वं सर्व्वं विश्वं सम्यगन्तर्व्वहिश्च समाप्नोषि व्याप्नोषि सुवर्णमिव कणककुण्डलादि स्वकार्य्यं व्याप्य वर्त्तसे ततः सर्व्वस्वरूपोऽसि॥ ४०॥

इदानीं भगवन्तं क्षमापयति सखेति द्वाभ्याम्। त्वां प्राकृतः सखेत्येवं मत्वा प्रसभं हठात् तिरस्कारेण यदुक्तं तत् क्षामये त्वामित्युत्तरेणान्वयः, किं तत्, हे कृष्ण हे यादव हे सखेति च सन्निरार्थः। प्रसभोक्तौ हेतुः तव महिमानमिदञ्च विश्वरूपमजानता मया प्रमादात् प्रणयेन स्नेहेन वा यदुक्तमिति। किञ्च यच्चेति। हे अच्युत! यच्च परिहासार्थं क्रीड़ादिषु तिरस्कृतोऽसि

पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान्।
न त्वत्समोऽस्त्यभ्यधिक: कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३

तस्मात् प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम्।
पितेव पुत्त्रस्य सखेव सख्यु:
प्रिय: प्रियायार्हसि देव सोढ़ुम् ॥ ४४

अदृष्टपूर्व्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे।

---

एक: केवल: सखीन् विना रहसि स्थित इत्यर्थ: अथवा तत्समक्षं तेषां परिहसताम् सखीनां समक्षं पुरतोऽपि तत् सर्व्वापराधजातं त्वामप्रमेयम् अचिन्त्यप्रभावं क्षामये क्षमां कारयामि ॥ ४१ ॥ ४२ ॥

अचिन्त्यप्रभावत्वमेवाह पितेति। न विद्यते प्रतिमा उपमा यस्य सोऽप्रतिमस्तथाविध: प्रभावो यस्य तव हे अप्रतिमप्रभाव त्वमस्य चराचरस्य लोकस्य पिता जनकोऽसि अतएव पूज्यश्च गुरुश्च गुरोरपि गरीयांश्च गुरुतर: अतो लोकत्रयेऽपि त्वत्सम एव तावदन्यो नास्ति परमेश्वरादन्यस्याभावात् त्वत्तोऽधिक: पुन: कुत: स्यात् ॥ ४३ ॥

यस्मादेवं तस्मादिति। तस्मात् त्वामीशं जगत ईड्यं स्तुत्यं प्रसादयामि। कथं कायं प्रणिधाय दण्डवन्निपत्य प्रणम्य नत्वा, अतस्त्वं ममापराधं सोढ़ुं, क्षन्तुमर्हसि, कस्य क इव पुत्त्रस्यापराधं कृपया पिता यथा सहते, सख्युर्मित्रस्यापराधं सखा निरुपाधिबन्धुर्यथा सहते, प्रियस्य प्रियाय यस्यापराधं तत्प्रियार्थं यथा तद्वत् ॥ ४४ ॥

एवं क्षामयित्वा प्रार्थयते अदृष्टेति द्वाभ्याम्। हे देव पूर्व्वम्

तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५
किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्त्ते ॥ ४६

श्रीभगवानुवाच।

मया प्रसन्नेन तवार्ज्जनेदं
रूपं परं दर्शितमात्मयोगात्।

---

अदृष्टं तव रूपं दृष्ट्वा हृषितो हृष्टोऽस्मि तथा भयेन च मे मनः प्रव्यथितं प्रचलितं तस्मान्मम व्यथानिवृत्तये तदेव रूपं दर्शय। हे देवेश हे जगन्निवास प्रसन्नो भव ॥ ४५ ॥

तदेव रूपं विशेषयन्नाह किरीटिनमिति। किरीटवन्तं गदावन्तं चक्रहस्तञ्च त्वां द्रष्टुमिच्छामि यथा पूर्व्वं दृष्टोऽसि तथैव अतः हे सहस्रबाहो हे विश्वमूर्त्ते इदं विश्वरूपम् उपसंहृत्य तेनैव किरीटादियुक्तेन चतुर्भुजेन रूपेण भव आविर्भव, तदनेन श्रीकृष्णमर्ज्जुनः पूर्व्वमपि किरीटादियुक्तमेव पश्यतीति गम्यते, यत्तु पूर्व्वमुक्तं विश्वरूपदर्शने किरीटिनं गदिनं चक्रिणञ्च पश्यामीति तद्बहुकिरीटाद्यभिप्रायेण, यद्वा एतावन्तं कालं यं त्वां किरीटिनं गदिनं चक्रिणञ्च सुप्रसन्नमपश्यं तमेवेदानीं तेजोराशिं दुर्निरीक्ष्यं पश्यामीत्येवमत्र वचनस्य व्यक्तिरित्यविरोधः ॥ ४६ ॥

एवं प्रार्थितः संभ्रममाश्वासयन् श्रीभगवानुवाच मयेति त्रिभिः। हे अर्ज्जुन किमिति त्वं बिभेषि यतो मया प्रसन्नेन कृपया तवेदं

तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्व्वम् ॥ ४७
न वेदयज्ञाध्ययनैर्न दानै-
र्नच क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८
मा ते व्यथा मा च विमूढ़भावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ४९

---

परमुत्तमं रूपं दर्शितम् आत्मनो मम योगात् योगमायासामर्थ्यात्, परत्वमेवाह तेजोमयं विश्वात्मकमनन्तमाद्यञ्च य म रूपं त्वदन्येन त्वाद्दशाद्भक्तादन्येन.पूर्व्वं न दृष्टम् ॥ ४७ ॥

एतद्दर्शनमतिदुर्लभं लब्ध्वा त्वं कृतार्थोऽसीत्याह न वेदेति । वेदाध्ययनव्यतिरेकेण यज्ञाध्ययनस्याभावात् यज्ञशब्देन यज्ञविद्याः कल्पसूत्राद्या लक्ष्यन्ते । वेदानां यज्ञविद्यानाञ्चाध्ययनैरित्यर्थः, नच दानैः नच क्रियाभिरग्निहोत्रादिभिर्नचोग्रैस्तपोभिश्चान्द्रायणा-दिभिरेवंरूपोऽहं त्वत्तोऽन्येन मनुष्यलोके द्रष्टुं शक्यः अपि तु त्वमेव केवलं मत्प्रसादेन दृष्ट्वा कृतार्थोऽसि ॥ ४८ ॥

एवमपि चेत् तवेदं घोरं दृष्ट्वा व्यथा भवति तर्हि तदेव रूपं दर्शयामीत्याह मा ते इति । ईदृक् ईदृशं घोरं मदीयं रूपं दृष्ट्वा ते व्यथा मास्तु विमूढ़भावो विमूढ़त्वञ्च मास्तु, विगतभयः प्रीत-मनाश्च सन् पुनस्त्वं तदेवेदं मम रूपं प्रकर्षेण पश्य ॥ ४९ ॥

सञ्जय उवाच।

इत्यर्ज्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा॥ ५०

अर्ज्जुन उवाच।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्द्दन।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः॥ ५१

श्रीभगवानुवाच।

सुदुर्द्दर्शमिदं रूपं दृष्टवानसि यन्मम।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः॥ ५२

---

एवमुक्त्वा प्राक्तनमेव रूपं दर्शितवानिति सञ्जय उवाच इतीति। वासुदेवोऽर्ज्जुनमित्युक्त्वा यथा पूर्व्वमासीत् तथैव किरीट-गदादियुक्तं चतुर्भुजं स्वीयं रूपं पुनर्द्दर्शयामास, एनमर्ज्जुनं भीतमेवं प्रसन्नवपुर्भूत्वा पुनरप्याश्वासितवान् महात्मा विश्वरूपः कृपालुरिति वा॥ ५०॥

ततो निर्भयः सन्नर्ज्जुन उवाच दृष्ट्वेदमिति। सचेताः प्रसन्नचित्तः इदानीं संवृत्तो जातोऽस्मि प्रकृतिं स्वास्थ्यञ्च प्राप्तोऽस्मि शेषं स्पष्टम्॥ ५१॥

स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं दर्शयन् श्रीभगवानुवाच सुदुर्द्दर्श-मिति। यन्मम विश्वरूपं दृष्टवानसि इदं सुदुर्द्दर्शमत्यन्तं द्रष्टुमशक्यम् अतो देवा अप्यस्य रूपस्य नित्यं सर्व्वदा दर्शनमिच्छन्ति केवलं न पुनरिदं पश्यन्ति॥ ५२॥

नाहं वेदै र्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा॥ ५३
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्ज्जुन।
ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप॥ ५४
मत्कर्म्मकृन्मत्परमो मद्भक्तः सङ्गवर्ज्जितः।
निर्व्वैरः सर्व्वभूतेषु यः स मामेति पाण्डव॥ ५५

इति श्रीमद्भगवद्गीतासूपनिषत्सु विश्वरूपदर्शनयोगो नामैकादशोऽध्यायः॥ ११॥

---

तत्र हेतुमाह नाहमिति। स्पष्टार्थः॥ ५३॥

तर्हि केनोपायेन द्रष्टुं शक्यसे तत्राह भक्त्या त्विति। अनन्यया मदेकनिष्ठया भक्त्या तु एवम्भूतो विश्वरूपोऽहं तत्त्वेन परमार्थतो ज्ञातुं शक्यः शास्त्रतोद्रष्टुं प्रत्यक्षतः प्रवेष्टुञ्च तादात्म्येन शक्यो नान्यैरुपायैः॥ ५४॥

अतः सर्व्वशास्त्रार्थसारं परमरहस्यं शृण्वित्याह मत्कर्म्मकृदिति। मदर्थं कर्म्म करोतीति मत्कर्म्मकृत्, अहमेव परमः पुरुषार्थो यस्य सः, ममैव भक्त आश्रितः, पुत्रादिषु सङ्गवर्ज्जितः, निर्व्वैरश्च सर्व्वभूतेषु एवम्भूतो यः स मां प्राप्नोति नान्यः इति॥५५॥

दैवैरपि सुदुर्द्दर्शं तपोयज्ञादिकोटिभिः।
भक्ताय भगवानेवं विश्वरूपमदर्शयत्॥

इति श्रीधरस्वामिकृतायां टीकायां
एकादशोऽध्यायः॥ ११॥

## द्वादशोऽध्यायः।

---

अर्ज्जुन उवाच।

एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥ १

श्रीभगवानुवाच।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥ २

---

निर्गुणोपासनस्यैवं सगुणोपासनस्य च।
श्रेयः कतरदित्येतन्निर्णेतुं द्वादशोद्यमः॥

पूर्व्वाध्यायान्ते "मत्कर्म्मकृन्मत्परमो मद्भक्त" इत्येवं भक्तिनिष्ठस्य श्रेष्ठत्वमुक्तं, कौन्तेय! प्रतिजानीहीत्यादिना च तत्र तस्यैव श्रेष्ठत्वं निर्णीतं, तथा तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत इत्यादिना, सर्व्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसीत्यादिना च ज्ञाननिष्ठस्य श्रेष्ठत्वमुक्तम्। एवमुभयोः श्रैष्ठ्यविशेषजिज्ञासया भगवन्तमर्ज्जुन उवाच एवमिति। एवं सर्व्वकर्म्मार्पणादिना सततयुक्तास्तन्निष्ठाः सन्तो ये भक्तास्त्वां विश्वरूपं सर्व्वज्ञं सर्व्वशक्तिं पर्य्युपासते तेषामुभयेषां मध्ये केऽतिशयेन योगविदोऽतिश्रेष्ठा इत्यर्थः॥ १॥

तत्र प्रथमाः श्रेष्ठा इत्युत्तरं श्रीभगवानुवाच मयीति। मयि परमेश्वरे सर्व्वज्ञत्वादिगुणविशिष्टे मन आवेश्य एकाग्रं कृत्वा नित्ययुक्ता मदर्थकर्म्मानुष्ठानादिना मन्निष्ठाः सन्तः श्रेष्ठया श्रद्धया युक्ता ये मामाराधयन्ति ते युक्ततमा ममाभिमताः॥ २॥

ये त्वक्षरमनिर्द्देश्यमव्यक्तं पर्य्युपासते ।
सर्व्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम् ॥ ३
संनियम्येन्द्रियग्रामं सर्व्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्व्वभूतहिते रताः ॥ ४
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५
ये तु सर्व्वाणि कर्म्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६

---

तर्हीतरे किं न श्रेष्ठा इत्यत आह ये त्विति द्वाभ्याम् । ये त्वक्षरं पर्य्युपासते ध्यायन्ति तेऽपि मामेव प्राप्नुवन्तीति द्वयोरन्वयः । अक्षरस्य लक्षणमनिर्द्देश्यमित्यादि । अनिर्द्देश्यशब्देन निर्द्देष्टुमशक्यं यतोऽव्यक्तं रूपादिहीनं सर्व्वगं सर्व्वव्यापि अव्यक्तत्वादेवाचिन्त्यं कूटस्थं कूटे मायाप्रपञ्चेऽधिष्ठानत्वेनावस्थितं अचलं स्पन्दनरहितं अतएव ध्रुवं नित्यं वृद्ध्यादिरहितं स्पष्टमन्यत् ॥ ३ ॥ ४ ॥

ननु तेऽपि त्वामेव प्राप्नुवन्ति तर्हीतरेषां युक्ततमत्वं कुत इत्यपेक्षायां क्लेशाक्लेशकृतं विशेषमाह क्लेश इति त्रिभिः । अव्यक्ते निर्व्विशेषेऽक्षरे आसक्तं चेतो येषां तेषां क्लेशोऽधिकतरः हि यस्मादव्यक्तविषया गतिर्निष्ठा देहाभिमानिभिर्दुःखं यथा भवति एवमवाप्यते देहाभिमानिनां नित्यं प्रत्यक्प्रवणत्वस्य दुर्घटत्वादिति भावः ॥ ५ ॥

मद्भक्तानान्तु मत्प्रसादादनायासेनैव सिद्धिर्भवतीत्याह ये त्विति द्वाभ्याम् । ये मयि परमेश्वरे सर्व्वाणि कर्म्माणि संन्यस्य समर्प्य मत्परा भूत्वा मां ध्यायन्तोऽनन्येन न विद्यतेऽन्यो भजनीयो

तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥ ७

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः ॥ ८

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ ९

अभ्यासेऽप्यसमर्थोऽसि मत्कर्म्मपरमो भव ।
मदर्थमपि कर्म्माणि कुर्व्वन् सिद्धिमवाप्स्यसि ॥ १०

---

यस्मिंस्तेनैवैकान्तभक्तियोगेनोपासत इत्यर्थः। एवं मय्यावेशितं चेतो यैस्तेषां मृत्युयुक्तात् संसारसागरादहं सम्यगुद्धर्त्ता अचिरेण भवामि ॥ ६ ॥ ७ ॥

यस्मादेवं तस्मान्मय्येवेति। मय्येव सङ्कल्पविकल्पात्मकं मन आधत्स्व स्थिरीकुरु, बुद्धिमपि व्यवसायात्मिकां मय्येव निवेशय, एवं कुर्व्वन् मत्प्रसादेन लब्धज्ञानः सन्नत ऊर्द्ध्वं देहान्ते मय्येव निवसिष्यसि निवत्स्यसि मदात्मना वासं करिष्यसि नात्र संशयः। तथा च श्रुतिः ;—"देहान्ते देवः परंब्रह्म तारकं व्याचष्टे" इति ॥ ८

अत्राशक्तं प्रति सुगमोपायमाह अथेति। स्थिरं यथा भवत्येवं मयि चित्तं धारयितुं यदि शक्तो न भवसि तर्हि विक्षिप्तं चित्तं पुनःपुनः प्रत्याहृत्य मदनुस्मरणलक्षणो योऽभ्यासयोगस्तेन मां प्राप्तुमिच्छ प्रयत्नं कुरु ॥ ९ ॥

यदि पुनर्नैवं तत्राह अभ्यास इति। यदि पुनरभ्यासेऽप्यशक्तोऽसि तर्हि मत्प्रीत्यर्थानि यानि कर्म्माणि एकादश्युपवासव्रतपूजापरिचर्य्यानामसंकीर्त्तनादीनि तदनुष्ठानमेव परमं यस्य तादृशो भव, एवम्भूतानि कर्म्माण्यपि मदर्थं कुर्व्वन् मोक्षं प्राप्स्यसि ॥ १० ॥

अथैतदप्यशक्तोऽसि कर्त्तुं मद्योगमाश्रितः ।
सर्व्वकर्म्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११
श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात् कर्म्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२
अद्वेष्टा सर्व्वभूतानां मैत्रः करुण एव च ।
निर्म्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ १३
सन्तुष्टः सततं योगी यतात्मा दृढ़निश्चयः ।

---

अथन्तं भगवद्धर्म्मपरिनिष्ठायामप्यशक्तस्य पक्षान्तरमाह अथेति । यद्येतदपि कर्त्तुं न शक्नोषि तर्हि मद्योगं मदेकशरणत्व-माश्रितः सन् सर्व्वेषां दृष्टादृष्टार्थानामावश्यकानाञ्चाग्निहोत्रादि-कर्म्मणां फलानि यतचित्तो भूत्वा परित्यज । एतदुक्तं भवति, मया तावदीश्वराज्ञया यथाशक्ति कर्म्माणि कर्त्तव्यानि, फलं तावद्दृष्टम-दृष्टं वा परमेश्वराधीनमित्येवं मयि भावमारोप्य फलासक्तिं परित्यज्य वर्त्तमानो मत्प्रसादेन कृतार्थो भविष्यसीति तात्पर्य्यम् ॥ ११ ॥

तमिमं फलत्यागं स्तौति श्रेय इति । सम्यग्ज्ञानरहिता-भ्यासाद्युक्तिसहितोपदेशपूर्व्वकं ज्ञानं श्रेष्ठं, तस्मादपि तत्पूर्व्वकं ध्यानं विशिष्टं "ततस्तु तं पश्यते निष्कलं ध्यायमान" इति श्रुतेः, तस्मादप्युक्तलक्षणः कर्म्मफलत्यागः श्रेष्ठः, तस्मादेवम्भूतत्यागात् कर्म्मसु कृतफलेषु चासक्तिनिवृत्त्या मत्प्रसादेन समनन्तरमेव संसारशान्तिर्भवति ॥ १२ ॥

एवम्भूतस्य भक्तस्य क्षिप्रमेव परमेश्वरप्रसादहेतून् धर्म्मानाह अद्वेष्टेत्यष्टभिः । सर्व्वभूतानां यथायथमद्वेष्टा मैत्रः करुणश्च उत्तमेषु द्वेषशून्यः, समेषु मित्रतया वर्त्तते इति मैत्रः हीनेषु कृपालुरित्यर्थः, निर्म्ममो निरहङ्कारश्च कृपालुत्वादेवान्यैः समे सुखदुःखे यस्य सः

मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः॥ १४
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः॥ १५
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।
सर्व्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः॥ १६
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः॥ १७

---

क्षमी क्षमाशीलः सन्तुष्ट इति। सततं लाभेऽलाभे च सन्तुष्टः सुप्रसन्नचित्तः योगी अप्रमत्तः यतात्मा संयतस्वभावः दृढ़ो मद्विषये निश्चयो यस्य मय्यर्पिते मनोबुद्धी येन एवम्भूतो यो मद्भक्तः स मे प्रियः॥ १३॥ १४॥

किञ्च यस्मादिति। यस्मात् सकाशात् लोको जनो नोद्विजते भयशङ्कया क्षोभं न प्राप्नोति, यश्च लोकान्नोद्विजते यश्च स्वाभाविकै-र्हर्षादिभिर्मुक्तः तत्र हर्षः स्वस्येष्टलाभे उत्साहः अमर्षः परस्य लाभेऽसहनं भयं त्रासः उद्वेगो भयादिनिमित्तश्चित्तक्षोभः एतै-र्विमुक्तो यो मद्भक्तः स मे प्रियः॥ १५॥

किञ्च अनपेक्ष इति। अनपेक्षो यदृच्छयोपस्थितेऽप्यर्थे निःस्पृहः, शुचिर्बाह्याभ्यन्तरशौचसम्पन्नः, दक्षोऽनलसः, उदासीनः पक्षपात-रहितः, गतव्यथ आधिशून्यः, सर्व्वान् दृष्टादृष्टार्थानारम्भानुद्यमान् परित्यक्तुं शीलं यस्य सः, एवम्भूतः सन् यो मद्भक्तः स मे प्रियः॥१६

किञ्च य इति। प्रियं प्राप्य यो न हृष्यति अप्रियं प्राप्य यो न द्वेष्टि इष्टार्थनाशे सति यो न शोचति अप्राप्तमर्थं यो न काङ्क्षति शुभाशुभे पुण्यपापे परित्यक्तुं शीलं यस्य सः, एवम्भूतो भूत्वा यो मद्भक्तिमान् स मे प्रियः॥ १७॥

समः शत्रौ च मित्रे च तथा मानापमानयोः।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्ज्जितः॥ १८

तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येनकेनचित्।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः॥ १९

ये तु धर्म्मामृतमिदं यथोक्तं पर्य्युपासते।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः॥ २०

इति श्रीमद्भगवद्गीतासूपनिषत्सु भक्तियोगो
नाम द्वादशोऽध्यायः॥ १२॥

---

किञ्च सम इति। शत्रौ मित्रे च सम एकरूपः मानापमानयोरपि तथा सम एव हर्षविषादशून्य इत्यर्थः, शीतोष्णयोः सुखदुःखयोश्च समः सङ्गविवर्ज्जितः क्वचिदप्यनासक्तः। किञ्च तुल्या निन्दा स्तुतिश्च यस्य सः मौनी संयतवाक् येनकेनचित् यथालब्धेन सन्तुष्टः अनिकेतो नियतवासशून्यः स्थिरमतिः व्यवस्थितचित्तः एवम्भूतो मद्भक्तिमान् यः स नरो मम प्रियः॥ १८॥ १९॥

उक्तधर्म्मजातं सफलमुपसंहरति ये त्विति। यथोक्तमुक्तप्रकारं धर्म्ममेवामृतम् अमृतत्वसाधनत्वात्, धर्म्म्यामृतमिति केचित् पठन्ति। ये तदुपासते अनुतिष्ठन्ति श्रद्धां कुर्व्वन्तो मत्परमाश्च सन्तो मद्भक्तास्तेऽतीव मे प्रिया इति॥ २०॥

दुःखमव्यक्तवर्त्मैतद्बहुविघ्नमतो बुधः।
सुखं कृष्णपदाम्भोजं भक्तिसत्पथवान् भजेत्॥

इति श्रीधरस्वामिकृतायां टीकायां द्वादशोऽध्यायः॥ १२॥

## त्रयोदशोऽध्यायः। *

श्रीभगवानुवाच।

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥ १

---

भक्तानामहमुद्धर्त्ता संसारादित्यवादि यत्।
त्रयोदशेऽथ तत्सिद्धौ तत्त्वज्ञानमुदीर्य्यते॥

"तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि न चिरात् पार्थ" इति पूर्व्वं प्रतिज्ञातं न चात्मज्ञानं विना संसारोद्धरणं सम्भवतीति तत्त्वज्ञानोपदेशार्थं प्रकृतिपुरुषविवेकाध्याय आरभ्यते, तत्र यत् सप्तमाध्याये अपरापरा चेति प्रकृतिद्वयमुक्तं ययोरविवेकाज्जीवभावमापन्नस्य चिरंप्रस्यायं संसारः, याभ्याञ्च जीवोपभोगार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिस्तदेव प्रकृतिद्वयं क्षेत्रक्षेत्रज्ञपदवाच्यं परस्परविभक्तं तत्त्वतो निरूपयिष्यन् श्रीभगवानुवाच इदमिति। इदं भोगायतनं शरीरं क्षेत्रमित्यभिधीयते संसारस्य प्ररोहभूमित्वात् एतद्यो वेत्ति अहं ममेति मन्यते, तं क्षेत्रज्ञं प्राहुः कृषीवलवत् तत्फलभोक्तृत्वात् तद्विदः क्षेत्रक्षेत्रज्ञयोर्विवेकज्ञाः॥ १॥

---

* एतदध्यायारम्भे—

"अर्ज्जुन उवाच।

प्रकृतिं पुरुषञ्चैव क्षेत्रं क्षेत्रज्ञमेव च।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयञ्च केशव॥"

इत्यधिकः पाठः क्वचित्। स तु न धृतो भाष्यादौ।

क्षेत्रज्ञञ्चापि मां विद्धि सर्व्वक्षेत्रेषु भारत।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तज्ज्ञानं मतं मम॥२
तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्।
स च यो यत्प्रभावश्च तत् समासेन मे शृणु॥३
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्।

---

तदेवं संसारिणः स्वरूपमुक्तमिदानीं तस्यैव पारमार्थिकम-संसारिस्वरूपमाह क्षेत्रज्ञमिति। तञ्च क्षेत्रज्ञं संसारिणं जीवं वस्तुतः सर्व्वक्षेत्रेष्वनुगतं मामेव विद्धि तत्त्वमसीति श्रुत्युपलक्षितेन चिदंशेन मद्रूपस्योक्तत्वात्। आदरार्थमेतत् ज्ञानं स्तौति क्षेत्रक्षेत्र-ज्ञयोर्यद्वैलक्षण्येन ज्ञानं तदेव मोक्षहेतुत्वात् ज्ञानं मम मतम्, अन्यत् तु वृथापाण्डित्यं बन्धहेतुत्वादित्यर्थः। तदुक्तं,—"तत्कर्म्म यन्न बन्धाय सा विद्या या च मुक्तये। आयासायापरं कर्म्म विद्यान्या शिल्पनैपुणम्" इति॥२॥

तत्र यद्यपि चतुर्व्विंशतिभेदभिन्ना प्रकृतिः क्षेत्रमित्यभिप्रेतं तथापि देहरूपेणैव परिणतायामेव तस्यामहंभावेनाविवेकः स्फुट इति तद्विवेकार्थमिदं शरीरं क्षेत्रमित्युक्तं तदेव प्रपञ्चयिष्यन् प्रतिजानीते तदिति। यदुक्तं मया तत् क्षेत्रं यत् स्वरूपतो जड़दृश्यादिस्वभावं यादृक् यादृशञ्च इच्छादिधर्म्मकं, यद्विकारि यैरिन्द्रियादिविकारै-र्युक्तं, यतश्च प्रकृतिपुरुषसंयोगाद्भवति यदिति यैः प्रकारैः स्थावर-जङ्गमादिभेदैर्भिन्नमित्यर्थः। स च क्षेत्रज्ञो यत्स्वरूपतो यत्प्रभावश्च अचिन्त्यैश्वर्य्ययोगेण यैः प्रभावैः सम्पन्नस्तत्सर्व्वं सङ्क्षेपतो मत्तः शृणु॥३

कैः विस्तरेणोक्तस्यायं सङ्क्षेप इत्यपेक्षायामाह ऋषिभिरिति। ऋषिभिर्वसिष्ठादिर्योगशास्त्रेषु ध्यानधारणादिविषयत्वेन वैराजादि-स्वरूपेण बहुधा गीतं निरूपितम्। विविधैर्व्विचित्रैर्नित्यनैमित्तिक-

ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः ॥ ५

---

काम्यकर्मादिविषयैश्छन्दोभिव दर्नानापूजनीयदेवतारूपेण गीतं ब्रह्मणः सूत्रैः पदैश्च ब्रह्म सूत्र्यते सूच्यते एभिरिति ब्रह्मसूत्राणि "यतो वा इमानि भूतानि जायन्ते" इत्यादीनि तटस्थलक्षणपराणि उपनिषद्वाक्यानि । तथा ब्रह्म पद्यते साक्षात् ज्ञायते एभिरिति पदानि स्वरूपलक्षणपराणि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादीनि तैश्च बहुधा गीतम् । किञ्च हेतुमद्भिः "सदेव सौम्येदमग्र आसीत्, कथमसतः सज्जायेत" इति । "को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयति" इत्यादियुक्तिमद्भिः । अन्यात् अपानचेष्टां कः कुर्यात्, प्राण्यात् प्राणव्यापारं वा कः कुर्यादिति श्रुतिपदयोरर्थः । विनिश्चितैरुपक्रमोपसंहारैरेकवाक्यतया असन्दिग्धार्थप्रतिपादकैरित्यर्थः । तदेवमेतैर्विस्तरेणोक्तं दुःसंग्रहं सङ्क्षेपत कथयिष्यामि तत् शृण्वित्यर्थः । यद्वा "अथातो ब्रह्मजिज्ञासा" इत्यादीनि ब्रह्मसूत्राणि गृह्यन्ते तान्येव ब्रह्म पद्यते निश्चीयते एभिरिति पदानि तैर्हेतुमद्भिः "ईक्षतेर्नाशब्दम्, आनन्दमयोऽभ्यासात्" इत्यादियुक्तिमद्भिर्विनिश्चितार्थैः शेषं समानम् ॥ ४ ॥

तत् क्षेत्रस्वरूपमाह महाभूतानीति द्वाभ्याम् । महाभूतानि भूम्यादीनि पञ्च, अहङ्कारस्तत्कारणभूतः, बुद्धिर्ज्ञानात्मकं महत्तत्त्वम्, अव्यक्तं मूलप्रकृतिः, इन्द्रियाणि दश बाह्यानि ज्ञानकर्म्मेन्द्रियाणि, एकञ्च मनः, इन्द्रियगोचराश्च पञ्च तन्मात्ररूपा एव शब्दादय आकाशादिविशेषगुणतया व्यक्ताः सन्त इन्द्रियविषयाः पञ्च तदेवं

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६
अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः ॥ ७

---

चतुर्विंशतितत्त्वान्युक्तानि । इच्छेति । इच्छादयः प्रसिद्धाः, सङ्घातः शरीरं, चेतना ज्ञानात्मिका मनोवृत्तिः, धृतिर्धैर्य्यम् एते चेच्छादयो दृश्यत्वान्नात्मधर्म्माः अपि तु मनोधर्म्माः अतः क्षेत्रान्तःपातिन एवोपलक्षणञ्चैतत् सङ्कल्पादीनाम् । तथा च श्रुतिः,—"कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भी रित्येतत् सर्व्वं मन एव" इति । अनेन यादृगिति प्रतिज्ञाताः क्षेत्रधर्म्मा दर्शिताः । एतत् क्षेत्रं सविकारमिन्द्रियादिविकारसहितं सङ्क्षेपेण तुभ्यं मयोक्तमिति क्षेत्रोपसंहारः ॥ ५ ॥ ६ ॥

इदानीममानित्वादिपञ्चभिरुक्तलक्षणात् क्षेत्रादतिरिक्ततया ज्ञेयं शुद्धं क्षेत्रज्ञं विस्तरेण वर्णयिष्यन् तत्त्वज्ञानसाधनान्याह अमानित्वमिति । अमानित्वं स्वगुणश्लाघाराहित्यम्, अदम्भित्वं दम्भराहित्यम्, अहिंसा परपीड़ावर्ज्जनं, क्षान्तिः सहिष्णुत्वम्, आर्ज्जवमवक्रता, आचार्य्योपासनं सद्गुरुसेवनं, शौचं वाह्यमाभ्यन्तरञ्च तत्र वाह्यं मृज्जलादिना आभ्यन्तरञ्च रागादिमलक्षालनम् । तथा च स्मृतिः,—"शौचञ्च द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथान्तरम्" इति । स्थैर्य्यं सन्मार्गप्रवृत्तस्य तदेकनिष्ठता, आत्मविनिग्रहः शरीरसंयमः एतज्ज्ञानमिति प्रोक्तमिति पञ्चमेनान्वयः ॥ ७ ॥

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥ ८
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥ ९
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।
विविक्तदेशसेवित्वमरतिर्जनसंसदि॥ १०
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥ ११

---

किञ्च इन्द्रियार्थेष्विति। जन्मादिषु दुःखदोषयोरनुदर्शनं पुनः-पुनरालोचनं दुःखरूपस्य दोषस्यानुदर्शनमिति वा स्पष्टमन्यत्॥ ८॥

किञ्च असक्तिरिति। पुत्रदारादिषु असक्तिः प्रीतित्यागः, अनभिष्वङ्गः पुत्रादीनां सुखे दुःखे वा अयमेव सुखी दुःखी चेत्यध्यासातिरेकाभावः, इष्टानिष्टयोरुपपत्तिषु प्राप्तिषु नित्यं सर्व्वदा समचित्तत्वम्॥ ९॥

किञ्च मयीति। मयि परमेश्वरेऽनन्ययोगेन सर्व्वात्मदृष्ट्या अव्यभिचारिणी एकान्ता भक्तिः, विविक्तः शुद्धश्चित्तप्रसादकरस्तं देशं सेवितुं शीलं यस्य तस्य भावस्तत्त्वं, प्राकृतानां जनानां संसदि सभायामरती रत्यभावः॥ १०॥

किञ्च अध्यात्मेति। आत्मानमधिकृत्य वर्त्तमानं ज्ञानं तस्मिन् नित्यत्वं नित्यभावः, तत्त्वं पदार्थशुद्धिनिष्ठत्वमित्यर्थः प्रयोजनं मोक्ष-स्तस्य दर्शनं मोक्षस्य सर्व्वोत्कृष्टत्वालोचनमित्यर्थः, एतदमानित्व मदम्भित्वमित्यादिविंशतिसंख्यकं यदुक्तमेतज्ज्ञानमिति प्रोक्तं वसि-ष्ठादिभिर्ज्ञानसाधनत्वात्, अतोऽन्यथा अस्मादिपरीतं मानित्वादि यत्तदज्ञानमिति ज्ञानविरोधित्वात् अतः सर्व्वथा त्याज्यमित्यर्थः॥११॥

ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते ॥ १२
सर्व्वतः पाणिपादं तत् सर्व्वतोऽक्षिशिरोमुखम् ।
सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥ १३
सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम् ।

---

एभिः साधनैर्यज्ज्ञेयं तदाह ज्ञेयमिति षड्भिः । यज्ज्ञेयं तत् प्रवक्ष्यामि । श्रोतुरादरसिद्धये ज्ञानफलं दर्शयति यद्वक्ष्यमाणं ज्ञात्वा अमृतं मोक्षं प्राप्नोति । किं तत्, अनादिमत् आदिमन्न भवतीत्यनादिमत्, परं निरतिशयं, ब्रह्म अनादीत्येतावतैव बहुव्रीहिणा अनादिमत्त्वे सिद्धेऽपि पुनर्म्मतुप्प्रत्ययश्छान्दसः । यद्वा अनादीति मत्परञ्चेति पदद्वयं मम विष्णोः परं निर्व्विशेषरूपं ब्रह्मेत्यर्थः । तदेवाह न सदित्यादि, विधिमुखेन प्रमाणस्य विषयः सच्छब्देनोच्यते निषेधविषयस्त्वसच्छब्देनोच्यते इदन्तु तदुभयविलक्षणमविषयत्वादित्यर्थः ॥ १२ ॥

नन्वेवं ब्रह्मणः सदसद्विलक्षणत्वे सति "सर्व्वं खल्विदम् ब्रह्मैवेदं सर्व्वम्" इत्यादि श्रुतिविरुध्येतेत्याशङ्क्य "परास्य शक्तिर्व्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतिप्रसिद्धया अचिन्त्यशक्त्या सर्व्वात्मत्वं तस्य दर्शयन्नाह सर्व्वत इति पञ्चभिः । सर्व्वतः सर्व्वत्र पाणयः पादाश्च यस्य तत्, सर्व्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत्, सर्व्वतः श्रुतिमत् श्रवणेन्द्रिययुक्तं, सत्, लोके सर्व्वमावृत्य व्याप्य तिष्ठति सर्व्वव्यवहारास्पदत्वेन तिष्ठतीत्यर्थः ॥ १३ ॥

किञ्च सर्व्वेन्द्रियेति । सर्व्वेषां चक्षुरादीनामिन्द्रियाणां गुणेषु रूपाद्याकारासु वृत्तिषु तत्तदाकारेणाभासत इति तथा, सर्व्वेन्द्रियाणि गुणांश्च तत्तद्विषयानाभासयतीति वा । सर्व्वैरिन्द्रियैः

असक्तं सर्व्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४
वहिरन्तश्च भूतानामचरं चरमेव च।
सूक्ष्मत्वात् तदविज्ञेयं दूरस्थञ्चान्तिके च तत् ॥ १५
अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम्।
भूतभर्त्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६

---

विवर्ज्जितञ्च। तथा च श्रुतिः,—"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादि। असक्तं सङ्गशून्यं तथापि सर्व्वं विभर्त्तीति सर्व्वभृत् सर्व्वस्याधारभूतं तदेव निर्गुणं सत्त्वादि-गुणरहितं गुणभोक्तृ च गुणानां सत्त्वादीनां भोक्तृ पालकम् ॥ १४ ॥

किञ्च वहिरिति। भूतानां चराचराणां स्वकार्य्याणां वहि-श्चान्तश्च तदेव सुवर्णमिव कटककुण्डलादीनां जलतरङ्गाणामन्त-र्व्वहिर्ज्जलमिव अचरं स्थावरं चरञ्च जङ्गमं भूतजातं तदेव कारणात्मकत्वात् कार्य्यस्य। एवमपि सूक्ष्मत्वात् रूपादिहीनत्वात् तदविज्ञेयम् इदं तदिति स्पष्टज्ञानार्हं न भवति। एतदविदुषां योजनलक्षान्तरितमिव दूरस्थञ्च सविकारायाः प्रकृतेः परत्वात्। विदुषां पुनः प्रत्यगात्मत्वादन्तिके च तत् नित्यसन्निहितम्। तथा च मन्त्रः,—"तदेजति तन्नैजति तद्दूरे तदन्तिके। तदन्तरस्य सर्व्वस्य तदु सर्व्वस्यास्य वाह्यत" इति। एजति चलति नैजति न चलति तत् उ अन्तिके इति च्छेदः ॥ १५ ॥

किञ्च अविभक्तमिति। भूतेषु स्थावरजङ्गमात्मकेष्वविभक्तं कारणात्मनाऽभिन्नं कार्य्यात्मना भिन्नमिव स्थितञ्च विभक्तं समुद्रा-ज्जातं फेनादि समुद्रादन्यन्न भवति तत् स्वरूपमेवोक्तं ज्ञेयं, भूतानां भर्त्तृ च पोषकं स्थितिकाले, प्रलयकाले च ग्रसिष्णु ग्रसनशीलं, सृष्टिकाले च प्रभविष्णु नानाकार्य्यात्मना प्रभवनशीलम् ॥ १६ ॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्व्वस्य विष्ठितम् ॥ १७
इति क्षेत्रं तथा ज्ञानं ज्ञेयञ्चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८
प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि ।

---

किञ्च ज्योतिषामपीति । ज्योतिषां सूर्य्यादीनामपि तत् ज्योतिः प्रकाशकम्, "येन सूर्य्यस्तपति तेजसेद्धः, न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निस्तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति" इत्यादि श्रुतेः । अतएव तमसोऽज्ञानात् परं तेनासंस्पृष्टमुच्यते, "आदित्यवर्णं तमसः परस्तात्" इत्यादि श्रुतेः । ज्ञानञ्च तदेव बुद्धिवृत्तावभिव्यक्तं तदेवं रूपाद्याकारेण ज्ञेयञ्च ज्ञानगम्यञ्च अमानित्वादिलक्षणेन पूर्व्वोक्त-ज्ञानसाधनेन प्राप्यमित्यर्थः । ज्ञानगम्यं विशिनष्टि, सर्व्वस्य प्राणिमात्रस्य हृदि विष्ठितं विशेषेणाप्रच्युतस्वरूपेण नियन्तृतया स्थितम् । धिष्ठितमितिपाठे अधिष्ठाय स्थितमित्यर्थः ॥ १७ ॥

उक्तं क्षेत्रादिकमधिकारिफलसहितमुपसंहरति इतीति । इत्येवं क्षेत्रं महाभूतादि धृत्यन्तं, तथा ज्ञानञ्च अमानित्वादि तत्त्वज्ञानार्थदर्शनान्तं, ज्ञेयञ्च अनादिमत् परं ब्रह्मेत्यादि विष्ठितमित्यन्तं वशिष्ठादिभिर्विस्तरेणोक्तं सर्व्वमपि मया संक्षेपेणोक्तं, एतच्च पूर्व्वाध्यायोक्तलक्षणो मद्भक्तो विज्ञाय मद्भावाय ब्रह्मत्वायोपपद्यते योग्यो भवति ॥ १८ ॥

तदेवं तत् क्षेत्रं यच्च यादृक् चेत्येतावत् प्रपञ्चितमिदानीन्तु यद्विकारि यत यत् स च यो यत्प्रभावश्चेत्येतत् पूर्व्वप्रतिज्ञात-मेव प्रकृतिपुरुषयोः संसारहेतुत्वकथनेन

विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ १९

कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २०

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्।

---

पञ्चभिः। तत्र प्रकृतिपुरुषयोरादिमत्त्वे तयोरपि प्रकृत्यन्तरे भाव्यमित्यनवस्थापत्तिः स्यादतस्तावुभावनादी विद्धि अनादेरीश्वरस्य प्रकृतित्वात् प्रकृतेरनादित्वं पुरुषोऽपि तदंशत्वादनादिरेव। अत्र च परमेश्वरस्य तच्छक्तीनाञ्चानादित्वं श्रीमच्छङ्करभगवद्भाष्यकृद्भिरतिप्रबन्धेनोपपादितमिति ग्रन्थबाहुल्यान्नास्माभिः प्रपञ्च्यते। विकारांश्च देहेन्द्रियादीन् गुणांश्च गुणपरिणामान् सुखदुःखमोहादीन् प्रकृतेः सम्भूतान् विद्धि ॥ १९ ॥

विकाराणां प्रकृतिसम्भवत्वं दर्शयन् पुरुषस्य संसारहेतुत्वं दर्शयति कार्य्येति। कार्य्यं शरीरं कारणानि सुखदुःखसाधनानीन्द्रियाणि तेषां कर्तृत्वे तदाकारपरिणामे प्रकृतिर्हेतुरुच्यते कपिलादिभिः, पुरुषो जीवस्तु तत्कृतसुखदुःखानां भोक्तृत्वे हेतुरुच्यते। अयं भावः, यद्यप्यचेतनायाः प्रकृतेः स्वतः कर्त्तृत्वं न सम्भवति, तथा पुरुषस्याप्यविकारिणो भोक्तृत्वं न सम्भवति, तथापि कर्त्तृत्वं नाम क्रियानिर्वर्त्तकत्वं तच्चाचेतनस्यापि चेतनादृष्टवशात् चैतन्याधिष्ठितत्वात् सम्भवति यथा वह्नेरूर्द्ध्वज्वलनं वायोस्तिर्य्यग्गमनं वत्सादृष्टवशात् स्तन्यपयसः क्षरणमित्यादि, अतः पुरुषसन्निधानात् प्रकृतेः कर्त्तृत्वमुच्यते भोक्तृत्वञ्च सुखदुःखसंवेदनं, तच्च चेतनधर्म्म एवेति प्रकृतिसन्निधानात् पुरुषस्य भोक्तृत्वमुच्यत इति ॥ २० ॥

तथाप्यविकारिणो जन्मरहितस्य च भोक्तृत्वं कथमित्यत आह पुरुष इति। हि यस्मात् प्रकृतिस्थस्तत्कार्य्ये देहे तादात्म्येन

कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१
उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ २२
य एवं वेत्ति पुरुषं प्रकृतिञ्च गुणैः सह।
सर्व्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते ॥ २३

---

स्थितः पुरुषः अतस्तज्जनितान् सुखदुःखादीन् भुङ्क्ते, अस्य च पुरुषस्य सतीषु असतीषु तिर्य्यगादियोनिषु यानि जन्मानि तेषु गुणसङ्गो गुणैः शुभाशुभकर्म्मकारिभिरिन्द्रियैः सङ्गः कारणमित्यर्थः ॥ २१ ॥

तदनेन प्रकारेण प्रकृत्यविवेकादेव पुरुषस्य संसारो न तु स्वरूपत इत्याशयेन तस्य स्वरूपमाह उपद्रष्टेति। अस्मिन् प्रकृतिकार्य्ये देहे वर्त्तमानोऽपि पुरुषः परो भिन्न एव न तद्गुणैर्युज्यत इत्यर्थः, तत्र हेतवः, यस्मादुपद्रष्टा पृथग्भूत एव समीपे स्थित्वा द्रष्टा साक्षीत्यर्थः, तथा अनुमन्ता अनुमोदितेव सन्निधिमात्रेणानुग्राहकः "साक्षी चेताः केवलो निर्गुणश्च" इत्यादि श्रुतेः, तथा ऐश्वरेण रूपेण भर्त्ता विधायकः भोक्ता पालक इति च, महांश्चासावीश्वरश्चेति ब्रह्मादीनामपि पतिरिति च परमात्मा अन्तर्यामी चेत्युक्तः श्रुत्या, तथा च श्रुतिः, "एष सर्व्वेश्वर एष भूताधिपतिरेष लोकपाल" इत्यादि ॥ २२ ॥

एवं प्रकृतिपुरुषविवेकज्ञानिनं स्तौति य एवमिति। एवमुपद्रष्टृत्वादिरूपेण पुरुषं यो वेत्ति प्रकृतिञ्च गुणैः सुखदुःखादिपरिणामैः सहितां यो वेत्ति स पुरुषः सर्व्वथा विधिमभिलङ्घ्य वर्त्तमानोऽपि पुनर्नाभिजायते मुच्यत एवेत्यर्थः ॥ २३ ॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।
अन्ये सांख्येन योगेन कर्म्मयोगेण चापरे ॥ २४
अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५
यावत् संजायते किञ्चित् सत्त्वं स्थावरजङ्गमम्।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥ २६
समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।

---

एवम्भूतविविक्तात्मज्ञानसाधनविकल्पानाह ध्यानेति द्वाभ्याम्। ध्यानेनात्माकारप्रत्ययावृत्त्या आत्मनि देह एव आत्मना मनसा एवमात्मानं केचित् पश्यन्ति, अन्ये तु सांख्येन प्रकृतिपुरुषवैलक्षण्या-लोचनेन योगेनाष्टाङ्गेनापरे च कर्म्मयोगेण पश्यन्तीति सर्व्वत्रानु-षङ्गः। एतेषाञ्च ध्यानादीनां यथायोगं क्रमसमुच्चये सत्यपि तत्तन्निष्ठाभेदाभिप्रायेण विकल्पोक्तिः ॥ २४ ॥

अतिमन्दाधिकारिणां निस्तारोपायमाह अन्ये त्विति। अन्ये तु सांख्ययोगादिमार्गेण एवमुपद्रष्टृत्वादिलक्षणमात्मानं साक्षात्-कर्त्तुमजानन्तोऽन्येभ्य आचार्य्येभ्य उपदेशतः श्रुत्वा उपासते ध्यायन्ति, तेऽपि च श्रद्धया उपदेशश्रवणपरायणाः सन्तो मृत्युं संसारं शनैरतितरन्त्येव ॥ २५ ॥

तत्र कर्म्मयोगस्य तृतीयचतुर्थपञ्चमेषु प्रपञ्चितत्वात् ध्यानयोगस्य च षष्ठाष्टमयोः प्रपञ्चितत्वात् ध्यानादेश्च सांख्यविविक्तात्मविषयत्वात् सांख्यमेव प्रपञ्चयन्नाह यावदिति, यावदध्यायसमाप्ति। यावत् यत्-किञ्चित् वस्तुमात्रं समुत्पद्यते तत् सर्व्वं क्षेत्रक्षेत्रज्ञयोर्योगादविवेक-कृततादात्म्याध्यासाद्भवतीति जानीहि ॥ २६ ॥

अविवेककृतं संसारोद्भवमुक्त्वा तन्निवृत्तये विविक्तात्मविषयं

विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७
समं पश्यन् हि सर्व्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८
प्रकृत्यैव च कर्म्माणि क्रियमाणानि सर्व्वशः ।
यः पश्यति तथात्मानमकर्त्तारं स पश्यति ॥ २९
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।

---

सम्यग्दर्शनमाह सममिति । स्थावरजङ्गमात्मकेषु भूतेषु निर्व्विशेष-सद्रूपेण समं यथा भवत्येवं तिष्ठन्तं परमात्मानं यः पश्यति अतएव तेषु विनश्यत्स्वप्यविनश्यन्तं यः पश्यति स एव सम्यक् पश्यति नान्य इत्यर्थः ॥ २७ ॥

कुत इत्यत आह समं पश्यन्निति । सर्व्वत्र भूतमात्रे समं सम्यगप्रच्युतस्वरूपेणावस्थितं परमात्मानं पश्यन् हि यस्मादात्मना स्वेनैवात्मानं न हिनस्ति अविद्यया सच्चिदानन्दरूपमात्मानं न विनाशयति, ततश्च परां गतिं मोक्षं प्राप्नोति, यस्त्वेवं न पश्यति स हि देहात्मदर्शी देहेन सहात्मानं हिनस्ति, तथा च श्रुतिः,— "असूर्य्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभि-गच्छन्ति ये के चात्महनो जना" इति ॥ २८ ॥

ननु शुभाशुभकर्म्मकर्तृत्वेन वैषम्ये दृश्यमाने कथमात्मनः समत्व-मित्याशङ्क्याह प्रकृत्यैवेति । प्रकृत्यैव देहेन्द्रियाकारेण परिणतया सर्व्वशः सर्व्वैः प्रकारैः क्रियमाणानि कर्म्माणि यः पश्यति, तथा-त्मानञ्चाकर्त्तारं देहाभिमानेनैवात्मनः कर्तृत्वं न स्वत इत्येवं यः पश्यति स एव सम्यक् पश्यति नान्य इत्यर्थः ॥ २६ ॥

इदानीं भूतानामपि प्रकृतितावन्मात्रत्वेनाभेदाद्गतभेदकृतम-प्यात्मनो भेदमपश्यन् ब्रह्मत्वमुपैतीत्याह यदेति । यदा भूतानां

तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ ३०
अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१
यथा सर्व्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।
सर्व्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३

---

स्थावरजङ्गमानां पृथग्भावं भेदम् एकस्थम् एकस्यामेवेश्वरशक्ति-रूपायां प्रकृतौ प्रलये स्थितमनुपश्यति आलोचयति तत एव तस्या एव प्रकृतेः सकाशाद्भूतानां विस्तारं सृष्टिसमये अनुपश्यति तदा प्रकृतितावन्मात्रत्वेन भूतानामप्यभेदं पश्यन् परिपूर्णं ब्रह्म सम्पद्यते ब्रह्मैव भवतीत्यर्थः ॥ ३० ॥

तथापि संसारावस्थायां देहसम्बन्धनिमित्तैः कर्म्मभिस्तत्फलैश्च सुखदुःखादिभिर्व्वैषम्यं दुष्परिहरमिति कुतः समदर्शनं तत्राह अनादित्वादिति। यदुत्पत्तिमत् तदेव हि सादि यच्च गुणवद्वस्तु तस्य गुणनाशे व्ययो भवति अयन्तु परमात्मा अनादिर्निर्गुणश्च, अतोऽव्ययः अविकारीत्यर्थः, तस्मात् शरीरे स्थितोऽपि न किञ्चित् करोति न च कर्म्मफलैर्लिप्यते ॥ ३१ ॥

तत्र हेतुं सदृष्टान्तमाह यथेति। यथा सर्व्वगतं पङ्कादिष्वपि स्थितमाकाशं सौक्ष्म्यादसङ्गत्वात् पङ्कादिभिर्नोपलिप्यते तथा सर्व्वत्र उत्तमे मध्यमे अधमे वा देहे स्थितोऽप्यात्मा नोपलिप्यते दैहिकै-र्दोषगुणैर्न युज्यत इत्यर्थः ॥ ३२ ॥

असङ्गत्वाल्लेपो नास्तीत्याकाशदृष्टान्तेन दर्शितं प्रकाशकत्वाच्च

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा।
भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परम्॥ ३४

इति श्रीमद्भगवद्गीतासूपनिषत्सु क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः॥ १३॥

---

प्रकाश्यधर्म्मैर्न युज्यत इति रविदृष्टान्तेनाह यथा प्रकाशयतीति। स्पष्टोऽर्थः॥ ३३॥

अध्यायार्थमुपसंहरति क्षेत्रक्षेत्रज्ञयोरिति। एवमुक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं भेदं विवेकज्ञानलक्षणेन चक्षुषा ये विदुः, तथा येयमुक्ता भूतानां प्रकृतिस्तस्याः सकाशात् मोक्षं मोक्षोपायं ध्यानादिकञ्च ये विदुस्ते परं पदं यान्ति॥ ३४॥

विविक्तौ येन तत्त्वेन मिश्रौ प्रकृतिपूरुषौ।
तं वन्दे परमानन्दं नन्दनन्दनमीश्वरम्॥

इति श्रीधरस्वामिकृतायां टीकायां
त्रयोदशोऽध्यायः॥ १३॥



# चतुर्द्दशोऽध्यायः ।

श्रीभगवानुवाच ।

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्व्वे परां सिद्धिमितो गताः ॥ १
इदं ज्ञानमुपाश्रित्य मम साधर्म्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २

---

पुंप्रकृत्योः स्वतन्त्रत्वं वारयन् गुणसङ्गतः ।
प्राह संसारवैचित्र्यं विस्तरेण चतुर्द्दशे ॥

"यावत् संजायते किञ्चित् सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि" इत्युक्तं, स च क्षेत्रक्षेत्रज्ञयोः संयोगो निरीश्वरसांख्याना मिव न स्वातन्त्र्येण किन्त्वीश्वरेच्छयैवेति कथनपूर्व्वकं कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मस्वित्यनेनोक्तं सत्त्वादिगुणकृतं संसारवैचित्र्यं प्रपञ्चयिष्यन्नेवंभूतं वक्ष्यमाणमर्थं स्तौति परं भूय इति द्वाभ्याम् । परं परमात्मनिष्ठं ज्ञायतेऽनेनेति ज्ञानमुपदेशं भूयोऽपि तुभ्यं प्रकर्षेण वक्ष्यामि । कथम्भूतं ज्ञानानां तपःकर्म्मादिविषयाणां मध्ये उत्तमं मोक्षहेतुत्वात् । तदेवाह यज्ज्ञात्वा मुनयो मननशीलाः सर्व्वे इतो देहबन्धनात् परां सिद्धिं मोक्षं प्राप्ताः ॥ १ ॥

किञ्च इदमिति । इदं वक्ष्यमाणं ज्ञानमुपाश्रित्य ज्ञानसाधनमनुष्ठाय मम साधर्म्म्यं मद्रूपत्वं प्राप्ताः सन्तः सर्गेऽपि ब्रह्मादिषूत्पद्यमानेष्वपि नोत्पद्यन्ते तथा प्रलयेऽपि न व्यथन्ति प्रलयदुःखं नानुभवन्ति पुनर्नावर्त्तन्त इत्यर्थः ॥ २ ॥

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्व्वभूतानां ततो भवति भारत ॥ ३

सर्व्वयोनिषु कौन्तेय मूर्त्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं वीजप्रदः पिता ॥ ४

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निवध्नन्ति महावाहो देहे देहिनमव्ययम् ॥ ५

---

तदेवं प्रशंसया श्रोतारमभिमुखीकृत्य परमेश्वराधीनयोः प्रकृति-पुरुषयोः सर्व्वभूतोत्पत्तिं प्रति हेतुत्वं न तु स्वतन्त्रयोरितीमं विवक्षितमर्थं कथयति ममेति । देशतः कालतश्चापरिच्छिन्नत्वान्महत् वृंहितत्वात् स्वकार्य्याणां वृद्धिहेतुत्वाद्वा ब्रह्म प्रकृतिरित्यर्थः । तन्महद्ब्रह्म मम परमेश्वरस्य योनिर्गर्भाधानस्थानं, तस्मिन्नहं गर्भं जगद्विस्तारहेतुं चिदाभासं दधामि निक्षिपामि प्रलये मयि लीनं सन्तमविद्याकामकर्म्मानुशयवन्तं चेत्रज्ञं सृष्टिसमये भोग्येन क्षेत्रेण संयोजयामीत्यर्थः, ततो गर्भाधानात् सर्व्वभूतानां ब्रह्मादीनां सम्भव उत्पत्तिर्भवतीति ॥ ३ ॥

न केवलं सृष्ट्युपक्रम एव मदधिष्ठानेनाभ्यां प्रकृतिपुरुषाभ्यामयं भूतोत्पत्तिप्रकारोऽपि तु सर्व्वदैवेत्याह सर्व्वेति । सर्व्वासु योनिषु मनुष्याद्यासु या मूर्त्तयः स्थावरजङ्गमात्मिका उत्पद्यन्ते तासां मूर्त्तीनां महद्ब्रह्म प्रकृतिर्योनिर्मातृस्थानीया, अहञ्च वीजप्रदः पिता गर्भाधानकर्त्ता पिता ॥ ४ ॥

तदेवं परमेश्वराधीनाभ्यां प्रकृतिपुरुषाभ्यां सर्व्वभूतोत्पत्तिं निरूप्येदानीं प्रकृतिसङ्गेन पुरुषस्य संसारं प्रपञ्चयति सत्त्वमित्यादि चतुर्भिः । सत्त्वं रजस्तम इत्येवं संज्ञकास्त्रयो गुणाः प्रकृतिसम्भवाः प्रकृतेः सम्भव उद्भवो येषां ते तथोक्ताः । गुणसाम्यं प्रकृतिस्तस्याः

तत्र सत्त्वं निर्म्मलत्वात् प्रकाशकमनामयम्।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ॥ ६
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्।
तन्निबध्नाति कौन्तेय कर्म्मसङ्गेन देहिनम्॥ ७
तमस्त्वज्ञानजं विद्धि मोहनं सर्व्वदेहिनाम्।

---

स्वकाशात् पृथक्त्वेनाभिव्यक्ताः सन्तः प्रकृतिकार्य्ये देहे तादात्म्येन स्थितं देहिनं चिदंशं वस्तुतोऽव्ययं निर्व्विकारमेव सन्तं निबध्नन्ति स्वकार्य्यैः सुखदुःखमोहादिभिः संयोजयन्तीत्यर्थः॥ ५॥

तत्र सत्त्वस्य लक्षणं बन्धकत्वप्रकारञ्चाह तत्रेति। तत्र तेषां गुणानां मध्ये सत्त्वं निर्म्मलत्वात् स्वच्छत्वात् स्फटिकमणिरिव प्रकाशकं भास्वरम् अनामयञ्च निरुपद्रवं शान्तमित्यर्थः। अतः शान्तत्वात् स्वकार्य्येण सुखेन यः सङ्गस्तेन बध्नाति प्रकाशकत्वाच्च स्वकार्य्येण ज्ञानेन यः सङ्गस्तेन च बध्नाति हे अनघ अपाप अहं सुखी ज्ञानी चेति मनो धर्म्मैस्तदभिमानिनि क्षेत्रज्ञे संयोजयतीत्यर्थः॥ ६॥

रजसो लक्षणं बन्धकत्वञ्चाह रज इति। रजःसंज्ञकं गुणं रागात्मकमनुरञ्जनरूपं विद्धि, अतएव तृष्णासङ्गसमुद्भवं तृष्णा अप्राप्ताभिलाषः, सङ्गः प्राप्तेऽर्थे प्रीतिविशेषेणासक्तिस्तयोस्तृष्णा-सङ्गयोः समुद्भवोऽस्मात् तद्रजो देहिनं दृष्टादृष्टार्थेषु कर्म्मसु सङ्गेनासक्त्या नितरां बध्नाति तृष्णासङ्गाभ्यां हि कर्म्मस्वासक्तिर्भवति इत्यर्थः॥ ७॥

तमसो लक्षणं बन्धकत्वञ्चाह तम इति। तमस्त्वज्ञानाज्जातम् आवरणशक्तिप्रधानात् प्रकृत्यंशादुद्भूतं विद्धीत्यर्थः। अतः सर्व्वेषां

प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८
सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९
रजस्तमश्चाभिभूय सत्त्वं भवति भारत।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १०
सर्व्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।

---

देहिनां मोहनं भ्रान्तिजनकम् अतएव प्रमादेनालस्येन निद्रया च तत्तमो देहिनं निबध्नाति। अत्र प्रमादोऽनवधानं, आलस्यमनुद्यमः, निद्रा चित्तस्यावसादः लयः ॥ ८ ॥

सत्त्वादीनामेव स्वस्वकार्य्यकरणे सामर्थ्यातिशयमाह सत्त्वमिति। सत्त्वं सुखे सञ्जयति संश्लेषयति दुःखशोकादिकारणे सत्यपि सुखाभिमुखमेव देहिनं करोतीत्यर्थः, एवं सुखादिकारणे सत्यपि रजः कर्म्मण्येव सञ्जयति, तमस्तु महत्सङ्गेनोत्पद्यमानमपि ज्ञानमावृत्याच्छाद्य प्रमादे सञ्जयति महद्भिरुपदिश्यमानस्यार्थस्यानवधाने योजयति, उत अपि आलस्यादावपि संयोजयतीत्यर्थः ॥ ९ ॥

तत्र हेतुमाह रज इति। रजस्तमश्चेति गुणद्वयमभिभूय तिरस्कृत्य सत्त्वं भवति अदृष्टवशादुद्भवति अतः स्वकार्य्ये सुखादौ सञ्जयतीत्यर्थः। एवं रजोऽपि सत्त्वं तमश्चेति गुणद्वयमभिभूयोद्भवति अतः स्वकार्य्ये तृष्णासङ्गादौ सञ्जयति। एवं तमोऽपि सत्त्वं रजश्चोभावपि गुणावभिभूयोद्भवति अतः स्वकार्य्ये प्रमादालस्यादौ सञ्जयतीत्यर्थः ॥ १० ॥

इदानीं सत्त्वादीनां विवृद्धानां लिङ्गान्याह सर्व्वद्वारेष्विति त्रिभिः। अस्मिन्नात्मनो भोगायतने देहे सर्व्वेष्वपि द्वारेषु श्रोत्रादिषु

ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११

लोभः प्रवृत्तिरारम्भः कर्म्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४

---

यदा शब्दादिज्ञानात्मकः प्रकाश उपजायते उत्पद्यते, तदानेन प्रकाशलिङ्गेन सत्त्वं विवृद्धं विद्यात् जानीयात्। उतशब्दात् सुखादिलिङ्गेनापि जानीयादित्युक्तम् ॥ ११ ॥

किञ्च लोभ इति। लोभो धनाद्यागमे बहुधा जायमानेऽपि यः पुनःपुनर्वर्द्धमानोऽभिलाषः, प्रवृत्तिर्नित्यं कुर्व्वद्रूपा, कर्म्मणामारम्भो महागृहादिनिर्म्माणोद्यमः, अशमः इदं कृत्वेदं करिष्यामीत्यादिसङ्कल्पविकल्पानुपरमः, स्पृहा उच्चावचेषु दृश्यमानेषु वस्तुषु इतस्ततो जिघृक्षा, रजसि विवृद्धे सति एतानि लिङ्गानि जायन्ते एभिर्लिङ्गैरजोगुणस्य विवृद्धिं जानीयादित्यर्थः ॥ १२ ॥

किञ्च अप्रकाश इति। अप्रकाशो विवेकभ्रंशः, अप्रवृत्तिरनुद्यमः, प्रमादः कर्त्तव्यार्थानुसन्धानराहित्यं, मोहो मिथ्याभिनिवेशः, तमसि प्रवृद्धे सत्येतानि लिङ्गानि जायन्ते। एतैस्तमसो वृद्धिं जानीयादित्यर्थः ॥ १३ ॥

मरणसमये विवृद्धानां सत्त्वादीनां फलविशेषमाह यदेति द्वाभ्याम्। सत्त्वे विवृद्धे सति यदा जीवो मृत्युं प्राप्नोति तदा उत्तमान् हिरण्यगर्भादीन् विदन्त्युपासत इत्युत्तमविदस्तेषां ये अमलाः

रजसि प्रलयं गत्वा कर्म्मसङ्गिषु जायते।
तथा प्रलीनस्तमसि मूढ़योनिषु जायते ॥ १५

कर्म्मणः सुकृतस्याहुः सात्त्विकं निर्म्मलं फलम्।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६

सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७

---

प्रकाशमया लोकाः सुखोपभोगस्थानविशेषास्तान् प्रतिपद्यते प्राप्नोति ॥ १४ ॥

किञ्च रजसीति। मृत्युं प्राप्य कर्म्मासक्तेषु मनुष्येषु जायते, तथा तमसि विवृद्धे सति प्रलीनो मृतो मूढ़योनिषु पश्वादिषु जायते ॥ १५ ॥

इदानीं सत्त्वादीनां स्वानुरूपकर्म्मद्वारेण विचित्रफलहेतुत्वमाह कर्म्मण इति। सुकृतस्य सात्त्विकस्य कर्म्मणः सात्त्विकं सत्त्वप्रधानं निर्म्मलं प्रकाशबहुलं सुखं फलमाहुः कपिलादयः। रजस इति राजसस्य कर्म्मण इत्यर्थः, कर्म्मफलकथनस्य प्रकृतत्वात् तस्य दुःखं फलमाहुः, तमस इति तामसस्य कर्म्मण इत्यर्थः, तस्याज्ञानं मूढ़त्वं फलमाहुः, सात्त्विकादिकर्म्मलक्षणञ्च नियतं सङ्गरहितमित्यादिना-ष्टादशेऽध्याये वक्ष्यति ॥ १६ ॥

तत्रैव हेतुमाह सत्त्वादिति। सत्त्वाज्ज्ञानं संजायते, अतः सात्त्विकस्य कर्म्मणः प्रकाशबहुलं सुखं फलं भवति, रजसो लोभो जायते तस्य च दुःखहेतुत्वात् तत्पूर्व्वकस्य कर्म्मणो दुःखं फलं भवति, तमसस्तु प्रमादमोहाज्ञानानि भवन्ति, अतस्तामसस्य कर्म्मणो-ऽज्ञानमात्रं प्रायः फलं भवतीति युक्तमेवेत्यर्थः ॥ १७ ॥

ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८
नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९
गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २०

---

इदानीं सत्त्वादिवृत्तिशीलानां फलभेदमाह ऊर्द्ध्वमिति। सत्त्वस्थाः सत्त्ववृत्तिप्रधाना ऊर्द्ध्वं गच्छन्ति सत्त्वोत्कर्षतारतम्यादुत्तरोत्तरशतगुणानन्दान् मनुष्यगन्धर्व्वपितृदेवादिलोकान् सत्यलोकपर्य्यन्तान् प्राप्नुवन्तीत्यर्थः। राजसास्तु तृष्णाद्याकुला मध्ये तिष्ठन्ति मनुष्यलोक एवोत्पद्यन्ते। जघन्यो निकृष्टस्तमोगुणस्तस्य वृत्तिः प्रमादमोहादिः तत्र स्थिता अधो गच्छन्ति तमसो वृत्तितारतम्यात् तामिस्रादिषु निरयेषूत्पद्यन्ते ॥ १८ ॥

तदेवं प्रकृतिगुणसङ्गकृतं संसारप्रपञ्चमुक्त्वा इदानीं तद्व्यतिरेकेण मोक्षं दर्शयति नान्यमिति। यदा तु द्रष्टा विवेकी भूत्वा बुद्ध्याद्याकारपरिणतेभ्यो गुणेभ्योऽन्यं कर्त्तारं नानुपश्यति अपि तु गुणा एव कर्म्माणि कुर्व्वन्तीति पश्यति गुणेभ्यश्च परं व्यतिरिक्तं तत्साक्षिणमात्मानं वेत्ति स तु मद्भावं ब्रह्मत्वमधिगच्छति प्राप्नोति ॥ १९ ॥

ततश्च गुणकृतसर्व्वानर्थनिवृत्त्या कृतार्थो भवतीत्याह गुणानिति। देहाद्याकारः समुद्भवः परिणामो येषां ते देहसमुद्भवास्तानेतान् त्रीनपि गुणानतीत्यातिक्रम्य तत्कृतैर्जन्मादिभिर्व्विमुक्तः सन्नमृतं परमानन्दं प्राप्नोति ॥ २० ॥

अर्ज्जुन उवाच।

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो।
किमाचारः कथञ्चैतांस्त्रीन् गुणानतिवर्त्तते॥ २१

श्रीभगवानुवाच।

प्रकाशञ्च प्रवृत्तिञ्च मोहमेव च पाण्डव।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति॥ २२
उदासीनवदासीनो गुणैर्यो न विचाल्यते।

---

गुणानेतानतीत्यामृतमश्नुत इत्येतच्छ्रुत्वा गुणातीतस्य लक्षणं तदाचारञ्च गुणात्ययोपायञ्च सम्यग्बुभुत्सुरर्ज्जुन उवाच कैरिति। हे प्रभो कैर्लिङ्गैः कीदृशैरात्मचिह्नैर्गुणातीतो देही भवतीति लक्षणप्रश्नः, क आचारोऽस्येति किमाचारः कथं वर्त्तत इत्यर्थः, कथञ्च केनोपायेनैतांस्त्रीनपि गुणानतीत्य वर्त्तते, तत् कथयेत्यर्थः॥ २१॥

स्थितप्रज्ञस्य का भाषा इत्यादिना द्वितीयाध्याये पृष्टमेव दत्तोत्तरमपि पुनर्विशेषबुभुत्सया पृच्छतीति ज्ञात्वा प्रकारान्तरेण तस्य लक्षणादिकं श्रीभगवानुवाच प्रकाशञ्चेत्यादि सप्तभिस्त्तत्रैकेन लक्षणमाह प्रकाशमिति। प्रकाशञ्च सर्व्वद्वारेषु देहेऽस्मिन्निति पूर्व्वोक्तं सत्वकार्य्यं, प्रवृत्तिञ्च रजःकार्य्यं, मोहञ्च तमःकार्य्यम्, उपलक्षणार्थमेतत्, सत्त्वादीनां सर्व्वाण्यपि कार्य्याणि यथायथं सम्प्रवृत्तानि स्वतः प्रवृत्तानि सन्ति दुःखबुद्ध्या यो न द्वेष्टि निवृत्तानि च सन्ति सुखबुद्ध्या यो न काङ्क्षति गुणातीतः स उच्यत इति चतुर्थेनान्वयः॥ २२॥

तदेवं सुसंवेद्यं गुणातीतस्य लक्षणमुक्त्वा द्वितीयप्रश्नस्य किमा-

गुणा वर्त्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥ २३
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः।
सर्व्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५
माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६

---

चार इत्यस्योत्तरमाह उदासीन इति त्रिभिः। उदासवत् साक्षितया आसीनः स्थितः सन् गुणैर्गुणकार्य्यैः सुखदुःखादिभिर्न यो विचाल्यते स्वरूपान्न प्रच्याव्यते अपितु गुणा एव स्वकार्य्येषु वर्त्तन्ते एतैर्मम सम्बन्ध एव नास्तीति विवेकज्ञानेन यस्तूष्णीमवतिष्ठति। परस्मैपदमार्षम्। नेङ्गते न चलति। अपि च समेति। समे दुःखसुखे यस्य, यतः स्वस्थः स्वरूप एव स्थितः, अतएव समानि लोष्टाश्मकाञ्चनानि यस्य, तुल्ये प्रियाप्रिये सुखदुःखहेतुभूते यस्य, धीरो धीमान्, तुल्या निन्दा च आत्मनः स्तुतिश्च यस्य ॥ २३ ॥ २४ ॥

अपि च मानेति। माने अपमाने च तुल्यः, मित्रपक्षे अरिपक्षे च तुल्यः, सर्व्वान् दृष्टादृष्टार्थानारम्भानुद्यमान् परित्यक्तुं शीलं यस्य स एवम्भूताचारयुक्तो गुणातीत उच्यते ॥ २५ ॥

कथञ्चैतांस्त्रीन् गुणानतिवर्त्तत इत्यस्य प्रश्नस्योत्तरमाह माञ्चेति। चशब्दोऽवधारणार्थः। मामेव परमेश्वरमव्यभिचारेण एकान्तेन भक्तियोगेन यः सेवते स एतान् गुणान् समतीत्य सम्यगतिक्रम्य ब्रह्मभूयाय ब्रह्मभावाय मोक्षाय कल्पते समर्थोऽभवति ॥ २६ ॥

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्म्मस्य सुखस्यैकान्तिकस्य च ॥ २७

इति श्रीमद्भगवद्गीतासूपनिषत्सु गुणत्रयविभागयोगो
नाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

तत्र हेतुमाह ब्रह्मणो हीति । हि यस्माद्ब्रह्मणोऽहं प्रतिष्ठा प्रतिमा घनीभूतं ब्रह्मैवाहं यथा घनीभूतप्रकाश एव सूर्य्यमण्डलं तद्वदित्यर्थः । तथा अव्ययस्य नित्यस्य अमृतस्य च मोक्षस्य नित्यमुक्तत्वात्, तथा तत्साधनस्य शाश्वतस्य धर्म्मस्य च शुद्धसत्त्वात्मकत्वात्, तथा ऐकान्तिकस्य अखण्डितस्य सुखस्य च प्रतिष्ठाहं परमानन्दरूपत्वात्, अतो मत्सेविनो मद्भावस्यावश्यम्भावित्वाद्युक्तमेवोक्तं ब्रह्मभूयाय कल्पत इति ॥२७ ॥

कृष्णाधीनगुणासङ्गप्रसञ्जितभवाम्बुधिम् ।
सुखं तरति मद्भक्त इत्यभाषि चतुर्द्दशे ॥

इति श्रीधरस्वामिकृतायां टीकायां
चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

# पञ्चदशोऽध्यायः ।

श्रीभगवानुवाच ।

ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १

---

वैराग्येण विना ज्ञानं न च भक्तिरतः स्फुटम् ।
वैराग्योपस्करं ज्ञानमीशः पञ्चदशेऽदिशत् ॥

पूर्व्वाध्यायान्ते "माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते" इत्यादिना परमेश्वरमेकान्तभक्त्या भजतस्तत्प्रसादलब्धज्ञानेन ब्रह्मभावो भवति इत्युक्तं, नचैकान्तभक्तिर्ज्ञानं वा अविरक्तस्य सम्भवतीति वैराग्यपूर्व्वकं ज्ञानमुपदेष्टुकामः प्रथमं तावत् सार्द्धश्लोकाभ्यां संसारस्वरूपं वृक्षं रूपकालङ्कारेण वर्णयन् श्रीभगवानुवाच ऊर्द्ध्वमूलमिति। ऊर्द्ध्वमुत्तमः क्षरा-क्षराभ्यामुत्कृष्टः पुरुषोत्तमो मूलं यस्य तम्। अध इति ततो-ऽर्व्वाचीनाः कार्य्योपाधयो हिरण्यगर्भादयो गृह्यन्ते ते तु शाखा इव शाखा यस्य तम्। विनश्वरत्वेन श्वः प्रभातपर्य्यन्तमपि न स्थास्य-तीति विश्वासानर्हत्वादश्वत्थं प्राहुः, प्रवाहरूपेणाविच्छेदादव्ययञ्च प्राहुः, "ऊर्द्ध्वमूलो अवाक्शाख एषोऽश्वत्थः सनातन" इत्याद्याः श्रुतयः। छन्दांसि वेदा यस्य पर्णानि धर्म्माधर्म्मप्रतिपादनद्वारेण छायास्थानीयैः कर्म्मफलैः संसारवृक्षस्य सर्व्वजीवाश्रयणीयत्वप्रति-पादनात् पर्णस्थानीया वेदाः। यस्तमेवम्भूतमश्वत्थं वेद स एव वेदार्थवित्। संसारप्रपञ्चवृक्षस्य मूलमीश्वरो ब्रह्मादयस्तदंशाः

अधश्चोर्द्धं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः।
अधश्च मूलान्यनुसन्ततानि
कर्म्मानुबन्धीनि मनुष्यलोके॥ २
न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा।

---

शाखास्थानीयाः स च संसारवृक्षो विनश्वरः प्रवाहरूपेण नित्यश्च वेदोक्तैः कर्म्मभिः सेव्यतामापादितश्च इत्येतावानेव हि वेदार्थः अत एवं विद्वान् वेदविदिति स्तूयते॥ १॥

किञ्च अधश्चेति। हिरण्यगर्भादयः कार्य्योपाधयो जीवाः शाखास्थानीयत्वेनोक्तास्तेषु च ये दुष्कृतिनस्तेऽधः पश्वादियोनिषु प्रसृता विस्तारं गताः सुकृतिनश्चोर्द्ध्वं देवादियोनिषु प्रसृतास्तस्य संसारवृक्षस्य शाखाः। किञ्च गुणैः सत्त्वादिवृत्तिभिर्जलसेचनैरिव यथायथं प्रवृद्धा वृद्धिं प्राप्ताः। किञ्च विषया रूपादयः प्रवालाः पल्लवस्थानीया यासां शाखाग्रस्थानीयाभिरिन्द्रियवृत्तिभिः संयुक्तत्वात्। किञ्च अधश्च चशब्दादूर्द्ध्वञ्च मूलानि अनुसन्ततानि विरूढ़ानि मुख्यं मूलमीश्वर एव इमानि त्वन्तरालानि मूलानि तत्तद्भोगवासनालक्षणानि। तेषां कार्य्यमाह मनुष्यलोके कर्म्मानुबन्धीनि इति। कर्म्म एव अनुबन्धि उत्तरभावि येषां तानि ऊर्द्ध्वाधोलोकेषूपभुक्ततत्तद्भोगवासनादिभिर्हि कर्म्मक्षये मनुष्यलोकप्राप्तानां तत्तदनुरूपेषु कर्म्मसु प्रवृत्तिर्भवति, तस्मिन्नेव हि कर्म्माधिकारो नान्येषु लोकेषु, अतो मनुष्यलोक इत्युक्तम्॥ २॥

किञ्च न रूपमिति। इह संसारे स्थितैः प्राणिभिरस्य संसारवृक्षस्य तथा ऊर्द्ध्वमूलत्वादिप्रकारेण रूपं नोपलभ्यते, न चान्तः

अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३
ततः पदं तत् परिमार्गितव्यं
यस्मिन् गता न निवर्त्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४
निर्म्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५

---

अवसानमपर्य्यन्तत्वात्, न चादिरनादित्वात्, न च सम्प्रतिष्ठा स्थितिः, कथं तिष्ठतीति नोपलभ्यते, यस्मादेवम्भूतोऽयं संसारवृक्षोदुरुच्छेदोऽनर्थकरश्च, तस्मादेनं दृढेन वैराग्येण शस्त्रेण छित्त्वा तत्त्वज्ञाने यतेतेत्याह अश्वत्थमेनमिति सार्द्धेन। एनमश्वत्थं सुविरूढमूलमत्यन्तबद्धमूलं सन्तम् असङ्गोऽहंममतात्यागस्तेन शस्त्रेण दृढेन सम्यग्विचारेण छित्त्वा पृथक्कृत्य तत इति। ततस्तस्य मूलभूतं तत्पदं वस्तु परिमार्गितव्यम् अन्वेष्टव्यं, कीदृशं यस्मिन् गता यत् पदं प्राप्ताः सन्तो भूयो न निवर्त्तन्ति नावर्त्तन्त इत्यर्थः। अन्वेषणप्रकारमेवाह तमेवेति। यत एषा पुराणी चिरन्तनी संसारप्रवृत्तिः प्रसृता विसृता, तमेव चाद्यं पुरुषं प्रपद्ये शरणं व्रजामि इत्येवमेकान्तभक्त्या अन्वेष्टव्यमित्यर्थः ॥ ३ ॥ ४ ॥

तत्प्राप्तौ साधनान्तराणि दर्शयन्नाह निर्म्मानेति। निर्गतौ मानमोहौ अहङ्कारमिथ्याभिनिवेशौ येभ्यस्ते, जितः पुत्रादिसङ्गरूपो दोषो यैस्ते, अध्यात्मे आत्मज्ञाने नित्याः परिनिष्ठिताः, विशेषेण

न तद्भासयते सूर्य्यो न शशाङ्को न पावकः।
यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम॥ ६

ममैवांशो जीवलोके जीवभूतः सनातनः।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति॥ ७



निवृत्तः कामो येभ्यस्ते, सुखदुःखहेतुत्वात् सुखदुःखसंज्ञानि शीतोष्णादीनि द्वन्द्वानि तैर्विमुक्ता अतएवामूढ़ा निवृत्ताविद्याः सन्तस्तदव्ययं पदं गच्छन्ति॥ ५॥

तदेव गन्तव्यं पदं विशिनष्टि न तदिति। तत् पदं सूर्य्यादयो न प्रकाशयन्ति, यत् प्राप्य न निवर्त्तन्ते योगिनस्तद्धाम स्वरूपं परमं मम, अनेन सूर्य्यादिप्रकाशाविषयत्वेन जड़त्वशीतोष्णादिदोषप्रसङ्गो निरस्तः॥ ६॥

ननु च त्वदीयं धाम प्राप्ताः सन्तो यदि न निवर्त्तन्ते, तर्हि "सति संपद्य न विदुः सति संपद्याम" इत्यादि श्रुतेः सुषुप्तिप्रलयसमये तत्प्राप्तिः सर्व्वेषामस्तीति को नाम संसारी स्यादित्याशङ्क्य संसारिणं दर्शयति ममैवेति पञ्चभिः। ममैवांशोऽयमविद्यया जीवभूतः सनातनः सर्व्वदा संसारित्वेन प्रसिद्धः असौ सुषुप्तिप्रलययोः प्रकृतौ लीनतया स्थितानि मनः षष्ठं येषां तानीन्द्रियाणि पुनर्जीवलोके संसारोपभोगार्थमाकर्षति। एतच्च कर्म्मेन्द्रियाणां प्राणस्य चोपलक्षणार्थम्। अयं भावः, सत्यं सुषुप्तिप्रलययोरपि मदंशत्वात् सर्व्वस्यापि जीवमात्रस्य मयि लयादस्त्येव मत्प्राप्तिस्तथाप्यविद्यावृतस्य सानुशयस्य सप्रकृतिके मयि लयो न तु शुद्धे। तदुक्तम्, "अव्यक्ताद्व्यक्तयः सर्व्वाः

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥ ८
श्रोत्रं चक्षुः स्पर्शनञ्च रसनं घ्राणमेव च।
अधिष्ठाय मनश्चायं विषयानुपसेवते॥ ९
उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः॥ १०

---

प्रभवन्ति" इत्यादिना। अतः पुनः संसाराय निर्गच्छन्नविद्वान् प्रकृतौ लीनतया स्थितानि स्वोपाधिभूतानीन्द्रियाण्याकर्षति, विदुषान्तु शुद्धस्वरूपप्राप्तेर्नावृत्तिरिति॥ ७॥

तान्याकृष्य किं करोतीत्याह शरीरमिति। यत् यदा शरीरान्तरं कर्म्मवशादवाप्नोति यतश्च शरीरादुत्क्रामति ईश्वरो देहादीनां स्वामी, तदा पूर्व्वस्मात् शरीरादेतानि गृहीत्वा तच्छरीरान्तरं सम्यगायाति, शरीरे सत्यपि इन्द्रियग्रहणे दृष्टान्तः आशयात् स्वस्थानात् कुसुमादेः सकाशात् गन्धान् गन्धवतः सूक्ष्मानंशान् गृहीत्वा वायुर्यथा गच्छति तद्वत्॥ ८॥

तान्येवेन्द्रियाणि दर्शयन् यदर्थं गृहीत्वा गच्छति तदाह श्रोत्रमिति। श्रोत्रादीनि वाह्येन्द्रियाणि मनश्चान्तःकरणमधिष्ठायाश्रित्य शब्दादीन् विषयानयं जीव उपभुङ्क्ते॥ ९॥

ननु कार्य्यकारणसंघातव्यतिरेकेणैवम्भूतमात्मानं सर्व्वेऽपि किं न पश्यन्ति तत्राह उत्क्रामन्तमिति। उत्क्रामन्तं देहाद्देहान्तरं गच्छन्तं तस्मिन्नेव देहे स्थितं वा विषयान् भुञ्जानं वा गुणान्वितमिन्द्रियादियुक्तं जीवं विमूढा नालोकयन्ति ज्ञानमेव चक्षुर्येषां ते विवेकिनः पश्यन्ति॥ १०॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः॥ ११
यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम्॥ १२
गामाविश्य च भूतानि धारयाम्यहमोजसा।
पुष्णामि चौषधीः सर्व्वाः सोमो भूत्वा रसात्मकः॥ १३
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।

---

दुर्ज्ञेयश्चायं यतो विवेकिष्वपि केचित् पश्यन्ति केचिन्न पश्यन्तीत्याह यतन्त इति। यतन्तो ध्यानादिभिः प्रयतमाना योगिनः केचिदेनमात्मानमात्मनि देहेऽवस्थितं विविक्तं पश्यन्ति, शास्त्राभ्यासादिभिर्यत्नं कुर्व्वाणा अप्यकृतात्मानोऽविशुद्धचित्ता अतएवाचेतसो मन्दमतय एनं न पश्यन्ति॥ ११॥

तदेवं "न तद्भासयते सूर्य्य" इत्यादिना पारमेश्वरं परं धामोक्तं, तत्प्राप्तानाञ्चापुनरावृत्तिरुक्ता, तत्र संसारिणोऽभावमाशङ्क्य संसारिस्वरूपं देहादिव्यतिरिक्तं दर्शितम्, इदानीं तदेव पारमेश्वरं रूपमनन्तशक्तित्वेन निरूपयति यदित्यादि चतुर्भिः। आदित्यादिषु स्थितं यदनेकप्रकारं तेजो विश्वं प्रकाशयति तत् सर्व्वं तेजो मदीयमेव जानीहि॥ १२॥

किञ्च गामिति। गां पृथिवीमोजसा बलेनाधिष्ठायाहमेव चराचराणि भूतानि धारयामि, अहमेव च रसमयः सोमो भूत्वा व्रीह्याद्योषधीः सर्व्वाः संवर्द्धयामि॥ १३॥

किञ्च अहमिति। वैश्वानरो जाठराग्निर्भूत्वा प्राणिनां देहस्थान्तः प्रविश्य प्राणापानाभ्याञ्च तदुद्दीपकाभ्यां सहितः प्राणिभिः

प्राणापानसमायुक्तः पचाम्यन्नं चतुर्व्विधम् ॥ १४

सर्व्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनञ्च ।
वेदैश्च सर्व्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६

---

भुक्तं भक्ष्यं भोज्यं लेह्यं चोष्यञ्चेति चतुर्व्विधमन्नं पचामि । तत्र यद्दन्तैरवखण्ड्यावखण्ड्य भक्ष्यते अपूपादि तद्भक्ष्यं, यत्तु केवलं जिह्वया विलोड्य निगीर्यते पायसादि तद्भोज्यं, यज्जिह्वायां निक्षिप्य रसास्वादेन क्रमशो निगीर्य्यते द्रवीभूतं गुडादि तल्लेह्यं, यत्तु दंष्ट्राभिर्निष्पीड्य रसांशं निगीर्य्यावशिष्टं त्यज्यते इक्षुदण्डादि तच्चोष्यमिति चतुर्व्विधस्य भेदः ॥ १४ ॥

किञ्च सर्व्वस्येति । सर्व्वस्य प्राणिजातस्य हृदि सम्यगन्तर्यामिरूपेण प्रविष्टोऽहम् अतश्च मत्त एव हेतोः प्राणिमात्रस्य पूर्व्वानुभूतार्थविषया स्मृतिर्भवति, ज्ञानञ्च विषयेन्द्रियसंयोगजं भवति, अपोहनञ्च तयोः प्रमोषो भवति । वेदैश्च सर्व्वैस्तत्तद्देवतारूपेणाहमेव वेद्यः, वेदान्तकृत् तत्सम्प्रदायप्रवर्त्तको ज्ञानदो गुरुरहमित्यर्थः, वेदविदेव च वेदार्थविदप्यहमेव ॥ १५ ॥

इदानीं तद्धाम परमं ममेति यदुक्तं स्वकीयं सर्व्वोत्तमत्वं तत् दर्शयति द्वाविति त्रिभिः । क्षरश्चाक्षरश्चेति द्वाविमौ पुरुषौ लोके प्रसिद्धौ । तावेवाह तत्र क्षरः पुरुषो नाम सर्व्वाणि भूतानि ब्रह्मादिस्थावरान्तानि शरीराणि, अविवेकिलोकस्य शरीरेष्वेव

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः॥ १७

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥ १८

यो मामेवमसम्मूढ़ो जानाति पुरुषोत्तमम्।
स सर्व्वविद्भजति मां सर्व्वभावेन भारत॥ १९



---

पुरुषत्वप्रसिद्धेः। कूटो राशिः शिलाराशिः पर्व्वत इव देहेषु नश्यत्स्वपि निर्व्विकारतया तिष्ठतीति कूटस्थश्चेतनो भोक्ता स त्वक्षरः पुरुष उच्यते विवेकिभिः॥ १६॥

यदर्थमेतौ लक्षितौ तदाह उत्तम इति। एताभ्यां क्षराक्षराभ्यामन्यो विलक्षण उत्तमः पुरुषः। वैलक्षण्यमेवाह परमश्चासावात्मा चेति उदाहृत उक्तः श्रुतिभिः आत्मत्वेन क्षरादचेतनाद्विलक्षणः परमत्वेनाक्षराच्च भोक्तुर्विलक्षण इत्यर्थः। परमात्मत्वमेव दर्शयति यो लोकत्रयमिति। य ईश्वर ईशनशीलः अव्ययश्च निर्व्विकार एव सन् लोकत्रयहृदयमाविश्य बिभर्त्ति पालयति॥ १७॥

एवम्भूतं पुरुषोत्तमत्वमात्मनो नामनिर्व्वचनेन दर्शयति यस्मादिति। यस्मात् क्षरं जड़वर्गमतिक्रान्तोऽहं नित्यमुक्तत्वात् अक्षराच्चेतनवर्गादप्युत्तमश्च नियन्तृत्वात् अतो लोके वेदे च पुरुषोत्तम इति प्रथितः प्रख्यातोऽस्मि। तथाच श्रुतिः,—"सर्व्वस्यायमात्मा सर्व्वस्य वशी सर्व्वस्येशानः सर्व्वमिदं प्रशास्ति" इत्यादि॥ १८॥

एवम्भूतेश्वरज्ञातुः फलमाह य इति। एवं निरुक्तप्रकारेणासम्मूढ़ो निश्चितमतिः सन् यो मां पुरुषोत्तमं जानाति सर्व्वप्रकारेण मामेव भजति ततश्च सर्व्ववित् सर्व्वज्ञो भवति॥ १९॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ।
एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २०

इति श्रीमद्भगवद्गीतासूपनिषत्सु पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

अध्यायार्थमुपसंहरति इतीति। इत्यनेन संक्षेपप्रकारेण गुह्यतममतिरहस्यं सम्पूर्णं शास्त्रमेव मयोक्तं नतु पुनर्विंशतिश्लोकमध्यायमात्रं, हे अनघ! व्यसनशून्य अतएवैतन्मदुक्तं बुद्ध्वा बुद्धिमान् सम्यक्ज्ञानी स्यात् कृतकृत्यश्च स्यात् योऽपि कोऽपि हे भारत त्वं कृतकृत्योऽसीति किं वक्तव्यमितिभावः ॥ २० ॥

संसारशाखिनं भित्त्वा स्पष्टं पञ्चदशे विभुः।
पुरुषोत्तमयोगाख्यं परं पदमुपादिशत् ॥

इति श्रीधरस्वामिकृतायां टीकायां पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोड़शोऽध्यायः।

श्रीभगवानुवाच।

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्ज्जवम्॥ १
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।

---

आसुरीं सम्पदं त्यक्त्वा दैवीमेवाश्रिता नराः।
मुच्यन्त इति निर्णेतुं तद्विवेकोऽथ षोड़शे॥

पूर्व्वाध्यायान्ते "एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत" इत्युक्तं, तत्र क एतत् तत्त्वं बुध्यते को वा न बुध्यत इत्यपेक्षायां तत्त्वज्ञानेऽधिकारिणोऽनधिकारिणश्च विवेकार्थं षोड़शाध्यायस्यारम्भः। निरूपिते हि कार्य्यार्थे चाधिकारिजिज्ञासा भवति। तदुक्तं भट्टैः,—"भारो यो येन वोढ़व्यः स प्रागान्दोलितो यदा। तदा कस्तस्य वोढ़ेति शक्यं कर्त्तुं निरूपणम्" इति। तत्राधिकारिविशेषणभूतां दैवीं सम्पदमाह अभयमिति त्रिभिः। अभयं भयाभावः, सत्त्वस्य चित्तस्य संशुद्धिः सुप्रसन्नता, ज्ञानयोगे आत्मज्ञानोपाये व्यवस्थितिः परिनिष्ठा, दानं स्वभोज्यस्यान्नादेर्यथोचितसंविभागः, दमो वाह्येन्द्रियसंयमः, यज्ञो यथाधिकारं दर्शपौर्णमासादिः, स्वाध्यायो ब्रह्मयज्ञादिः, तप उत्तराध्याये वक्ष्यमाणं शारीरादि, आर्ज्जवमवक्रता। किञ्च अहिंसेति। अहिंसा परपीड़ावर्ज्जनं, सत्यं यथादृष्टार्थभाषणम्, अक्रोधस्ताड़ितस्यापि चित्ते क्रोधानुत्पत्तिः, त्याग औदार्य्यं, शान्तिश्चित्तोपरतिः,

दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥ ३
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानञ्चाभिजातस्य पार्थ सम्पदमासुरीम् ॥ ४
दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥ ५

---

पैशुनं परोक्षे परदोषप्रकाशनं तद्वर्ज्जनमपैशुनं, भूतेषु दीनेषु दया, अलोलुप्त्वं लोभाभावः अवर्णलोपश्छान्दसः, मार्दवं मृदुत्वम् अक्रूरता, ह्रीरकार्य्यप्रवृत्तौ लोकलज्जा, अचापलं व्यर्थक्रियाराहित्यम् । किञ्च तेज इति । तेजः प्रागल्भ्यं, क्षमा परिभवादिषूपपद्यमानेषु क्रोधप्रतिबन्धः, धृतिर्दुःखादिभिरवसादे चित्तस्य स्थिरीकरणं, शौचं बाह्याभ्यन्तरशुद्धिः, अद्रोहो जिघांसाराहित्यम्, अतिमानिता आत्मन्यतिपूज्यत्वाभिमानस्तदभावो नातिमानिता, एतान्यभयादीनि षड्विंशतिप्रकाराणि दैवीं सम्पदमभिजातस्य भवन्ति देवयोग्यां सात्त्विकीं सम्पदमभिलक्ष्य तदाभिमुख्येन जातस्य भाविकल्याणस्य पुंसो भवन्तीत्यर्थः ॥ १—३ ॥

आसुरीं सम्पदमाह दम्भ इति । दम्भो धर्म्मध्वजित्वं, दर्पो धन-विद्यादिनिमित्तं चित्तस्यौत्सुक्यम्, अभिमानो व्याख्यात एव, क्रोधः प्रसिद्धः, पारुष्यं निष्ठुरत्वम्, अज्ञानमविवेकः, आसुरीमित्युपलक्षणम् असुराणां राक्षसानाञ्च या सम्पत्तिस्तामभिलक्ष्य जातस्यैतानि दम्भादीनि भवन्ति ॥ ४ ॥

एतयोः सम्पदोः कार्य्यं दर्शयन्नाह दैवीति । दैवी या सम्पत् तया युक्तो मयोपदिष्टे तत्त्वज्ञानेऽधिकारी, आसुर्य्या सम्पदा युक्तस्तु

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु॥ ६
प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते॥ ७
असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्।

---

नित्यं संसारीत्यर्थः। एतच्छ्रुत्वा किमहमत्राधिकारी न वेति सन्देहाद्व्याकुलमर्ज्जुनमाश्वासयति हे भारत मा शुचः शोकं मा कार्षीः यतस्त्वं दैवीं सम्पदमभिजातोऽसि॥ ५॥

आसुरी सम्पत् सर्व्वात्मना वर्ज्जयितव्येत्येतदर्थमासुरीं सम्पदं प्रपञ्चयितुमाह द्वाविति। द्वौ द्विप्रकारौ भूतानां सर्गौ मे वचनाच्छृणु, आसुरराक्षसप्रकृत्योरेकीकरणे द्वावित्युक्तम्, अतो राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीं श्रिता इत्यादिना नवमाध्यायोक्तप्रकृतित्रैविध्येनाविरोधः, स्पष्टमन्यत्॥ ६॥

आसुरीं विस्तरशो निरूपयति प्रवृत्तिञ्चेत्यादि द्वादशभिः। धर्म्मे प्रवृत्तिमधर्म्मान्निवृत्तिञ्चासुरस्वभावा जना न जानन्ति, अतः शौचमाचारः सत्यञ्च तेषु नास्त्येव॥ ७॥

ननु वेदोक्तयोर्धर्म्माधर्म्मयोः प्रवृत्तिं निवृत्तिञ्च कथं न विदुः कुतो वा धर्म्माधर्म्मयोरनङ्गीकारे जगतः सुखदुःखादिव्यवस्था स्यात्, कथं वा शौचाचारादिविषयामीश्वराज्ञामतिवर्त्तेरन् ईश्वरानङ्गीकारे च कुतो जगदुत्पत्तिः स्यादत आह असत्यमिति। नास्ति सत्यं वेदपुराणादि प्रमाणं यस्मिंस्तादृशं जगदाहुः वेदादीनां प्रामाण्यं न मन्यन्त इत्यर्थः। तदुक्तं,—"त्रयो वेदस्य कर्त्तारो मुनिभण्डनिशाचराः" इत्यादि। अतएव नास्ति धर्म्माधर्म्मरूपा प्रतिष्ठा व्यवस्थाहेतुर्यस्य तत्स्वाभाविकं जगद्वैचित्र्यमाहुरित्यर्थः। अतएव

अपरस्परसम्भूतं किमन्यत् कामहैतुकम्॥ ८
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्म्माणः क्षयाय जगतोऽहिताः॥ ९
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः।
मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः॥ १०
चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः।
कामोपभोगपरमा एतावदितिनिश्चिताः॥ ११

---

नास्तीश्वरः कर्त्ता व्यवस्थापकश्च यस्य तादृशं जगदाहुः। तर्हि कुतोऽस्य जगत उत्पत्तिं वदन्तीत्यत आह अपरस्परसम्भूतमिति। अपरश्च परश्चेति अपरस्परम् अपरस्परतोऽन्योन्यतः स्त्रीपुंसयोर्मिथुनात् सम्भूतं जगत्। किमन्यत् कारणमस्य नास्त्यन्यत् किञ्चित्। किन्तु कामहैतुकमेव स्त्रीपुंसयोरुभयोः काम एव प्रवाहरूपेण हेतुरस्येत्यर्थः॥ ८॥

किञ्च एतामिति। एतां लौकायतिकानां दृष्टिं दर्शनमाश्रित्य नष्टात्मानो मलीमसचित्ताः सन्तोऽल्पबुद्धयो दृष्टार्थमात्रमतयः, अतएवोग्रं हिंस्रं कर्म्म येषां ते, अहिता वैरिणो भूत्वा जगतः क्षयाय प्रभवन्ति उद्भवन्तीत्यर्थः॥ ९॥

अपि च काममाश्रित्येति। दुष्पूरं पूरयितुमशक्यं काममाश्रित्य दम्भादिभिर्युक्ताः सन्तः क्षुद्रदेवताराधनादौ प्रवर्त्तन्ते। कथम् असद्ग्राहाद्गृहीत्वा अनेन मन्त्रेणैतां देवतामाराध्य महानिधीन् साधयाम इत्यादीन् दुराग्रहान् मोहमात्रेण स्वीकृत्य प्रवर्त्तन्ते, अशुचिव्रता अशुचीनि मद्यमांसादिविषयाणि व्रतानि येषां ते॥ १०॥

किञ्च चिन्तामिति। प्रलयो मरणमेवान्तो यस्यास्तामपरिमेयां परिमातुमशक्यां चिन्तामाश्रिता नित्यचिन्तापरा इत्यर्थः। कामोप-

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान्॥ १२
इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम्।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्॥ १३
असौ मया हतः शत्रुर्हनिष्ये चापरानपि।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी॥ १४
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः॥ १५
अनेकचित्तविभ्रान्ता मोहजालसमावृताः।

---

भोग एव परमो येषां ते, एतावदिति कामोपभोग एव परमः पुरुषार्थो नान्यदस्तीति कृतनिश्चया अर्थसञ्चयानीहन्त इत्युत्तरेणान्वयः, तथा च वार्हस्पत्यसूत्रं,—"काम एवैकः पुरुषार्थ" इति "चैतन्यविशिष्टः कामः पुरुष" इति च। अतएव आशेति। आशा एव पाशास्तेषां शतैर्बद्धा इतस्तत आकृष्यमाणाः, कामक्रोधपरायणाः कामक्रोधौ परमयनमाश्रयो येषां ते, कामभोगार्थमन्यायेन चौर्य्यादिनार्थानां सञ्चयान् राशीनीहन्त इच्छन्ति॥ ११॥ १२॥

तेषां मनोरथं कथयन् नरकप्राप्तिमाह इदमद्येति चतुर्भिः। प्राप्स्ये प्राप्स्यामि मनोरथं मनसः प्रियं, स्पष्टमन्यत्। एतेषाञ्च त्रयाणां श्लोकानामित्यज्ञानविमोहिताः सन्तो नरके पतन्तीति चतुर्थेनान्वयः। किञ्च असाविति। सिद्धः कृतकृत्यः, स्पष्टमन्यत्। किञ्च आढ्य इति। आढ्यो धनादिसम्पन्नः, अभिजनवान् कुलीनः, यक्ष्ये यागाद्यनुष्ठानेनापि दीक्षितान्तरेभ्यः सकाशान्महतीं प्रतिष्ठां प्राप्स्यामि, दास्यामि स्तावकेभ्यश्च, मोदिष्ये हर्षं प्राप्स्यामि इत्येवमज्ञानेन विमोहिता मिथ्याभिनिवेशं प्रापिताः। एवम्भूता यत्

प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६
आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्व्वकम् ॥ १७
अहङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।

---

प्राप्नुवन्ति तच्छृणु अनेकेति । अनेकेषु मनोरथेषु प्रवृत्तं चित्तम् अनेकचित्तं तेन विभ्रान्ता विक्षिप्ताः तेनैव मोहमयेन जालेन समावृता मत्स्या इव सूत्रमयेण जालेन यन्त्रिताः एवं कामभोगेषु प्रसक्ता अभिनिविष्टाः सन्तोऽशुचौ कश्मले नरके पतन्ति ॥ १३—१६ ॥

यच्च इति च यस्तेषां मनोरथ उक्तः, स केवलं दम्भाहङ्कारादिप्रधान एव न तु सात्त्विक इत्यभिप्रायेणाह आत्मेति द्वाभ्याम् । आत्मनैव सम्भाविताः पूज्यतां नीताः नतु साधुभिः कैश्चित्, अतएव स्तब्धा अनम्राः धनेन यो मानो मदश्च ताभ्यां समन्विताः सन्तः ते नाममात्रेण ये यज्ञास्ते नामयज्ञाः यद्वा दीक्षितः सोमयाजीत्येवमादिना नाममात्रप्रसिद्धये ये यज्ञास्तैर्यजन्ते, कथं दम्भेन नतु श्रद्धया अविधिपूर्व्वकञ्च यथा भवति तथा ॥ १७ ॥

अविधिपूर्व्वकत्वमेव प्रपञ्चयति अहङ्कारमिति । अहङ्कारादीन् संश्रिताः सन्त आत्मपरदेहेषु आत्मदेहे परदेहेषु च चिदंशेन स्थितं मां प्रद्विषन्तो यजन्ते दम्भयज्ञेषु श्रद्धाया अभावादात्मनो वृथैव पीड़ा भवति, तथा पश्वादीनामप्यविधिना हिंसायां चैतन्यद्रोह एवावशिष्यत इति प्रद्विषन्त इत्युक्तम्, अभ्यसूयकाः सन्मार्गवर्त्तिनां गुणेषु दोषारोपकाः ॥ १८ ॥

तेषाञ्च कदाचिदप्यासुरभावप्रच्युतिर्न भवतीत्याह तानिति

क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९
आसुरीं योनिमापन्ना मूढ़ा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २०
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥ २१
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२
यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३

---

द्वाभ्याम्। तानहं मां द्विषतः क्रूरान् संसारेषु जन्ममृत्युमार्गेषु तत्राप्यासुरीष्वेवातिक्रूरासु व्याघ्रसर्पादियोनिष्वजस्रमनवरतं क्षिपामि तेषां पापकर्म्मणां तादृशं फलं ददामीत्यर्थः ॥ १९ ॥

किञ्च आसुरीमिति। ते च मामप्राप्यैवेत्येवकारेण मत्प्राप्ति-शङ्कापि कुतस्तेषां मत्प्राप्त्युपायं सन्मार्गमप्राप्य ततोऽप्यधमां कृमि-कीटादिगतिं यान्तीत्युक्तम्। शेषं स्पष्टम् ॥ २० ॥

उक्तानामासुरदोषाणां मध्ये सकलदोषमूलभूतं दोषत्रयं सर्व्वथा वर्ज्जनीयमित्याह त्रिविधमिति। कामः क्रोधो लोभश्च इतीदं त्रिविधं नरकस्य द्वारम्, अतएवात्मनो नाशनं नीचयोनिप्रापकं तस्मादेतत् त्रयं सर्व्वात्मना त्यजेत् ॥ २१ ॥

त्यागे विशिष्टं फलमाह एतैरिति। तमसो नरकस्य द्वार-भूतैरेतैस्त्रिभिः कामादिभिर्विमुक्तो नर आत्मनः श्रेयःसाधनं तपो-योगादिकमाचरति ततश्च मोक्षं प्राप्नोति ॥ २२ ॥

कामादित्यागश्च स्वधर्म्माचरणं विना न सम्भवतीत्याह य इति। शास्त्रविधिं वेदविहितं धर्म्ममुत्सृज्य यः कामकारतो यथेष्टं वर्त्तते

तस्माच्छास्त्रं प्रमाणन्ते कार्य्याकार्य्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्त्तुमिहार्हसि ॥ २४

इति श्रीमद्भगवद्गीतासूपनिषत्सु दैवासुरसम्पद्विभागयोगो
नाम षोड़शोऽध्यायः ॥ १६ ॥

---

स सिद्धिं तत्त्वज्ञानं न प्राप्नोति न च सुखमुपशमं न च परां गतिं मोक्षं प्राप्नोति ॥ २३ ॥

फलितमाह तस्मादिति । इदं कार्य्यमिदमकार्य्यमित्यस्यां व्यवस्थायां ते तव शास्त्रं श्रुतिस्मृतिपुराणादिकमेव प्रमाणं, अतः शास्त्रविधिनोक्तं कर्म्म ज्ञात्वा इह कर्म्माधिकारे वर्त्तमानः यथाधिकारं कर्म्म कर्त्तुमर्हसि तन्मूलत्वात् सत्त्वशुद्धिसम्यग्ज्ञानमुक्तीनामित्यर्थः ॥ २४ ॥

दैवदैतेयसम्पत्तिसंविभागेन षोड़शे ।
तत्त्वज्ञानेऽधिकारस्तु सात्त्विकस्येति दर्शितम् ॥

इति श्रीधरस्वामिकृतायां टीकायां
षोड़शोऽध्यायः ॥ १६ ॥

# सप्तदशोऽध्यायः ।

अर्ज्जुन उवाच ।

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १

उक्ताधिकारहेतूनां श्रद्धा मुख्या च सात्त्विकी ।
इति सप्तदशे गौणश्रद्धाभेदस्त्रिधोच्यते ॥

पूर्व्वाध्यायान्ते "यः शास्त्रविधिमुत्सृज्य वर्त्तते कामाकारतः । न स सिद्धिमवाप्नोति" इत्यनेन शास्त्रोक्तविधिमुत्सृज्य कामचारेण वर्त्तमानस्य ज्ञानेऽधिकारो नास्तीत्युक्तं, तत्र शास्त्रविधिमुत्सृज्य कामचारं विना श्रद्धया वर्त्तमानानां किमधिकारोऽस्ति नास्ति वेति बुभुत्सया अर्ज्जुन उवाच य इति । अत्र च शास्त्रविधिमुत्सृज्य यजन्त इत्यनेन शास्त्रार्थं बुद्धा तमुल्लङ्घ्य वर्त्तमाना न गृह्यन्ते तेषां श्रद्धया यजनानुपपत्तेः, आस्तिक्यबुद्धिर्हि श्रद्धा न चासौ शास्त्रविरुद्धेऽर्थे शास्त्रज्ञानवतां सम्भवति, तानेवाधिकृत्य त्रिविधा भवति श्रद्धेति, यजन्ते सात्त्विका देवानित्याद्युत्तरानुपपत्तेश्च, अतो नात्र शास्त्रोल्लङ्घिनो गृह्यन्ते अपि तु क्लेशबुद्ध्या वा आलस्याद्वा शास्त्रार्थज्ञाने प्रयत्नमकृत्वा केवलमाचारपरम्परावशेन श्रद्धया क्वचिद्देवताराधनादौ प्रवर्त्तमाना गृह्यन्ते, अतोऽयमर्थः ये शास्त्रविधिमुत्सृज्य दुःखबुद्ध्या आलस्याद्वा अनादृत्य केवलमाचारप्रामाण्येन श्रद्धयान्विताः सन्तो यजन्ते, तेषान्तु का निष्ठा का स्थितिः क आश्रयः । तामेव विशेषेण पृच्छति, किं सत्त्वम् आहो किं रजः अथवा तम इति तेषां तादृशी देवपूजादिप्रवृत्तिः किं सत्त्वसंश्रिता

श्रीभगवानुवाच।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २

सत्त्वानुरूपा सर्व्वस्य श्रद्धा भवति भारत।

---

रजःसंश्रिता तमःसंश्रिता वेत्यर्थः, श्रद्धायाः सात्त्विकत्वात् लोभबुद्ध्या आलस्येन च शास्त्रानादरस्य राजसतामसत्वात् त्रिधा सन्देहः। यदि सत्त्वसंश्रिता तर्हि तेषामपि सात्त्विकत्वाद्यथोक्तात्मज्ञानेऽधिकारः स्यादन्यथा नेति तात्पर्य्यार्थः ॥ १ ॥

अत्रोत्तरं श्रीभगवानुवाच त्रिविधेति। अयमर्थः शास्त्रतत्त्वज्ञानतः प्रवर्त्तमानानां परमेश्वरपूजाविषया सात्त्विकी एकविधैव भवति श्रद्धा लोकाचारमात्रेण तु प्रवर्त्तमानानां देहिनां या श्रद्धा सा तु सात्त्विकी राजसी तामसी चेति त्रिविधा भवति। तत्र हेतुः स्वभावजा स्वभावः पूर्व्वसंस्कारस्तस्माज्जाता स्वभावमन्यथाकर्त्तुं समर्थं हि शास्त्रोत्थं विवेकज्ञानं तेषां नास्ति, अतः केवलं पूर्व्वस्वभावेन भवन्ती श्रद्धा त्रिविधा भवति। तामिमां त्रिविधां श्रद्धां शृण्विति, तदुक्तं व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दनेत्यादिना ॥ २ ॥

ननु श्रद्धा सात्त्विक्येव सत्त्वकार्य्यत्वेन त्वयैव श्रीभागवते उद्धवं प्रति निर्द्दिष्टत्वात्, यथोक्तं,—शमो दमस्तितिक्षा च तपः सत्यं दया स्मृतिः। तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः। इत्येताः सत्त्ववृत्तयः” इति। अतः कथं तस्यास्त्रैविध्यमुच्यते, सत्यं तथापि रजस्तमोमिश्रितत्वेन सत्त्वस्य त्रैविध्यात् श्रद्धाया अपि त्रैविध्यं घटत इत्याह सत्त्वेति। सत्त्वानुरूपा सत्त्वतारतम्यानुसारिणी सर्व्वस्य विवेकिनोऽविवेकिनो वा लोकस्य श्रद्धा भवति, तस्मादयं

श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३
यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५

---

पुरुषो लौकिकः श्रद्धाविकारः त्रिविधया श्रद्धया विक्रियत इत्यर्थः । तदेवाह योयच्छ्रद्धः यादृशी श्रद्धा यस्य स एव सः तादृश-श्रद्धायुक्तः । स एव स इति यः पूर्वं सत्त्वोत्कर्षेण सात्त्विकश्रद्धायुक्त एव भवति, यस्तु रजस उत्कर्षेण राजसश्रद्धायुक्तः स पुनस्तादृश एव भवति, यस्तु तमस उत्कर्षेण तामसश्रद्धायुक्तः स पुनस्तादृश एव भवतीति लोकाचारमात्रेण प्रवर्त्तमानेष्वेवं सात्त्विकराजसतामस-श्रद्धाव्यवस्था, शास्त्रजनितविवेकज्ञानयुक्तानान्तु स्वभावविजयेन सात्त्विकी एकैव श्रद्धेति प्रकरणार्थः ॥ ३ ॥

सात्त्विकादिभेदमेव कार्य्यभेदेन प्रपञ्चयति यजन्त इति । सात्त्विका जनाः सत्त्वप्रकृतीन् देवानेव यजन्ते पूजयन्ति, राजसास्तु रजःप्रकृतीन् यक्षान् राक्षसांश्च यजन्ते, एतेभ्योऽन्ये विलक्षणा-स्तामसा जनास्तामसानेव प्रेतान् भूतगणांश्च यजन्ते, सत्त्वादि-प्रकृतीनां तत्तद्देवादीनां पूजारुचिभिस्तत्तत्पूजकानां सात्त्विकादित्वं ज्ञातव्यमित्यर्थः ॥ ४ ॥

राजसतामसेष्वपि पुनर्विशेषान्तरमाह अशास्त्रविहितमिति द्वाभ्याम् । शास्त्रविधिमजानन्तोऽपि केचित् प्राचीनपुण्यसंस्कारेणो-त्तमाः सात्त्विका एव भवन्ति केचिन्मध्यमा राजसा भवन्ति अधमास्तु तामसा भवन्ति ये पुनरत्यन्तं मन्दभाग्यास्ते गतानुगत्या पाषण्डसङ्गेन च तदाचारानुवर्त्तिनः सन्तोऽशास्त्रविहितं घोरं

कर्षयन्तः शरीरस्थं भूतग्राममचेतसः।
माञ्चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥ ६
आहारस्त्वपि सर्व्वस्य त्रिविधो भवति प्रियः।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७
आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः॥८

---

भूतभयङ्करं तपस्तप्यन्ते कुर्व्वन्ति। तत्र हेतवः, दम्भाहङ्काराभ्यां संयुक्ताः, तथा कामोऽभिलाषः रागः आसक्तिः बलमाग्रहः एतै-रन्विताः सन्तः, तानासुरनिश्चयान् विद्धीत्युत्तरेणान्वयः ॥ ५ ॥

किञ्च कर्षयन्त इति। शरीरस्थम् आरम्भकत्वेन देहे स्थितं भूतानां पृथिव्यादीनां ग्रामं समूहं कर्षयन्तो वृथैवोपवासादिभिः कृशं कुर्व्वन्तोऽचेतसोऽविवेकिनः माञ्चान्तर्यामितया अन्तःशरीरस्थं देहमध्ये स्थितं मदाज्ञालङ्घनेनैव कर्षयन्तो ये तपश्चरन्ति तानासुरनिश्चयान् आसुरोऽतिक्रूरो निश्चयो येषां तान् विद्धि ॥ ६ ॥

आहारादिभेदादपि सात्त्विकादिभेदं दर्शयितुमाह आहारस्त्वि-त्यादि त्रयोदशभिः। सर्व्वस्यापि जनस्य य आहारोऽन्नादिः, स तु यथायथं त्रिविधः प्रियो भवति, तथा यज्ञतपोदानानि त्रिवि-धानि भवन्ति, तेषां वक्ष्यमाणं भेदमिमं शृणु। एतच्च राजस-तामसाहारयज्ञादिपरित्यागेन सात्त्विकाहारयज्ञादिसेवया सत्त्ववृद्धौ यत्नः कर्त्तव्य इत्येतदर्थं कथ्यते ॥ ७ ॥

तत्राहारत्रैविध्यमाह आयुरिति त्रिभिः। आयुर्जीवनं, सत्त्वमुत्साहः, बलं शक्तिः, आरोग्यं रोगराहित्यं, सुखं चित्तप्रसादः, प्रीतिरभिरुचिः आयुरादीनां विवर्द्धनाः विशेषेण वृद्धिकराः ते च रस्या रसवन्तः, स्निग्धाः स्नेहयुक्ताः, स्थिरा देहे सारांशेन चिर-

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९

यातयामं गतरसं पूति पर्य्युषितञ्च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १०

अफलाकाङ्क्षिभिर्यज्ञो विधिदिष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।

---

कालावस्थायिनः, हृद्याः दृष्टिमात्रादेव हृदयङ्गमाः, एवम्भूता आहारा भक्ष्यभोज्यादयः सात्त्विकप्रियाः । तथा कट्विति । अतिशब्दः कट्वादिषु सप्तस्वपि सम्बध्यते, तेन अतिकटुर्निम्बादिः, अत्यम्लोऽतिलवणोऽत्युष्णश्च प्रसिद्धः अतितीक्ष्णो मरीचादिः अतिरूक्षः कङ्गुकोद्रवादिः अतिविदाही सर्षपादिः, अतिकट्वादय आहारा राजसस्येष्टाः प्रियाः, दुःखं तात्कालिकहृदयसन्तापादि, शोकः पश्चाद्भावि दौर्म्मनस्यम्, आमयो रोगः एतान् प्रददति प्रयच्छन्तीति तथा । यातयाममिति । यातो यामः प्रहरो यस्य पक्वस्यौदनादेः यद्यातयामं शैत्यावस्थां प्राप्तमित्यर्थः, गतरसं निष्पीड़ितसारं, पूति दुर्गन्धं पर्य्युषितं दिनान्तरपक्वम् उच्छिष्टम् अन्यभुक्तावशिष्टम् अमेध्यम् अभक्ष्यं कलञ्जादि एवम्भूतं भोजनं भोज्यं तामसस्य प्रियम् ॥ ९—१० ॥

यज्ञोऽपि त्रिविधस्तत्र सात्त्विकं यज्ञमाह अफलाकाङ्क्षिभिरिति त्रिभिः । फलकाङ्क्षारहितैः पुरुषैर्विधानादिष्ट आवश्यकतया विहितो यो यज्ञ इज्यते अनुष्ठीयते स सात्त्विको यज्ञः, कथमिज्यते, यष्टव्यमेवेति यज्ञानुष्ठानमेव कार्य्यं नान्यत् फलं साधनीयमित्येवं मनः समाधायैकाग्रं कृत्वेत्यर्थः ॥ ११ ॥

राजसं यज्ञमाह अभिसन्धायेति । फलमभिसन्धाय उद्दिश्य

इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३

देवद्विजगुरुप्राज्ञपूजनं शौचमार्ज्जवम् ।
ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते ॥ १४

अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् ।
स्वाध्यायाभ्यसनञ्चैव वाङ्मयं तप उच्यते ॥ १५

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥ १६

---

यत्त्विज्यते यज्ञः क्रियते दम्भार्थञ्च स्वमहत्त्वख्यापनाय तं यज्ञं राजसं विद्धि ॥ १२ ॥

तामसं यज्ञमाह विधीति । विधिहीनं शास्त्रोक्तविधिशून्यं असृष्टान्नं ब्राह्मणादिभ्योऽसृष्टं न निष्पादितमन्नं यस्मिंस्तं मन्त्रैर्हीनं यथोक्तदक्षिणारहितं श्रद्धाशून्यञ्च यज्ञं तामसं परिचक्षते कथयन्ति शिष्टाः ॥ १३ ॥

तपसः सात्त्विकादिभेदं दर्शयितुं प्रथमं तावच्छारीरादिभेदेन तस्य त्रैविध्यमाह देवेत्यादित्रिभिः, तत्र शारीरमाह देवेति । प्राज्ञा गुरुव्यतिरिक्ता अन्येऽपि तत्त्वविदः, देवब्राह्मणादिपूजनं शौचादिकञ्च शारीरं शरीरनिर्व्वर्त्त्यं तप उच्यते ॥ १४ ॥

वाचिकं तप आह अनुद्वेगकरमिति । उद्वेगं भयं न करोतीत्यनुद्वेगकरं वाक्यं सत्यं श्रोतुं प्रियं हितञ्च परिणामे सुखकरं स्वाध्यायाभ्यसनं वेदाभ्यासश्च वाङ्मयं वाचा निर्व्वर्त्त्यं तपः ॥ १५ ॥

मानसं तप आह मन इति । मनःप्रसादः स्वच्छता, सौम्यत्वमक्रूरता, मौनं मुनेर्भावो मननमित्यर्थः, आत्मनो मनसो विनिग्रहो

श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते॥ १७

सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम्॥ १८

मूढ़ग्राहेणात्मनो यत् पीड़या क्रियते तपः।
परस्योत्सादनार्थं वा तत् तामसमुदाहृतम्॥ १९

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्॥ २०

---

विषयेभ्यः प्रत्याहारः, भावसंशुद्धिः व्यवहारे मायाराहित्यमित्येतन्मानसं तपः॥ १६॥

तदेवं शरीरवाङ्मनोभिर्निर्व्वर्त्त्यं त्रिविधं तपो दर्शितं, तस्य त्रिविधस्यापि तपसः सात्त्विकादिभेदेन त्रैविध्यमाह श्रद्धयेत्यादित्रिभिः। तत् त्रिविधमपि तपः श्रेष्ठया श्रद्धया फलाकाङ्क्षाशून्यैर्युक्तैरेकाग्रचित्तैर्नरैस्तप्तं सात्त्विकं कथयन्ति॥ १७॥

राजसमाह सत्कारेति। सत्कारः साधुकारः साधुरयमिति तापसोऽयमित्यादिवाक्पूजा मानः अभ्युत्थानाभिवादनादिर्दैहिकी पूजा अर्थो लाभादिः एतदर्थं दम्भेन च तपः क्रियते अतएव चलमनियतम् अध्रुवञ्च क्षणिकं यदेवम्भूतं तपस्तदिह राजसं प्रोक्तम्॥१८॥

तामसं तप आह मूढ़ेति। मूढ़ग्राहेणाविवेककृतेन दुराग्रहेणात्मनः पीड़या यत् तपः क्रियते परस्योत्सादनार्थं वा अन्यस्य विनाशार्थमभिचाररूपं तत् तामसमुदाहृतं कथितम्॥ १९॥

पूर्व्वप्रतिज्ञातमेव दानस्य त्रैविध्यमाह दातव्यमिति। दातव्यमेवेत्येवंनिश्चयेन यद्दानं दीयते अनुपकारिणे प्रत्युपकारासमर्थाय देशे कुरुक्षेत्रादौ काले ग्रहणादौ पात्रे चेति देशकालसाहचर्य्यात्

यत् तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत् तामसमुदाहृतम् ॥ २२
ओं तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।

---

सप्तमी प्रयुक्ता पात्रे पात्रभूताय तपःश्रुतादिसम्पन्नाय ब्राह्मणायेत्यर्थः, यद्वा, चतुर्थ्यैवैषा पात्रे इति त्रजन्तं रक्षकाय इत्यर्थः। स हि सर्व्वस्मादापद्गणाद्दातारं पातीति पाता तस्मै यदेवम्भूतं दानं तत् सात्त्विकम् ॥ २० ॥

राजसं दानमाह यत् त्विति। कालान्तरेऽयं मां प्रत्युपकरिष्यतीत्येवमर्थं फलं वा स्वर्गादिकमुद्दिश्य यत् पुनर्दानं दीयते परिक्लिष्टं चित्तक्लेशप्रयुक्तं यथा भवत्येवम्भूतं, तत् दानं राजसमुदाहृतं कथितम्॥२१

तामसं दानमाह अदेशेति। अदेशे अशुचिस्थाने अकाले अशौचादिसमये अपात्रेभ्यो विटनटादिभ्यो यद्दानं दीयते, तत् देशकालपात्रसम्पत्तावपि असत्कृतं पादप्रक्षालनादिसत्कारशून्यम् अवज्ञातं पात्रतिरस्कारयुक्तम् एवम्भूतं दानं तामसमुदाहृतम् ॥ २२ ॥

नन्वेवं विचार्य्यमाणे सर्व्वमपि यज्ञतपोदानादि राजसतामसप्रायमेवेति वर्थो यज्ञादिप्रयास इत्याशङ्क्य तथाविधस्यापि सात्त्विकत्वोपपादनप्रकारं दर्शयितुमाह ओमिति। ओं तत्सदिति त्रिविधो ब्रह्मणः परमात्मनो निर्द्देशो नाम्ना व्यपदेशः स्मृतः शिष्टैः, तत्र तावदोमिति निर्द्दिष्टब्रह्मेत्यादिश्रुतिप्रसिद्धत्वात् विदुषाम् अपरोक्षत्वाच्च तच्छब्दोऽपि ब्रह्मणो नाम, परमार्थसत्त्वसाधुत्वप्रशस्तत्वादिभिः

प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४

तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः।

दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५

सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते।

प्रशस्ते कर्म्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६

---

सच्छब्दोऽपि ब्रह्मणो नाम। "सदेव सौम्येदमग्र आसीत्" इत्यादिश्रुतेः। अयं त्रिविधोऽपि नामनिर्द्देशो विगुणमपि सगुणं कर्त्तुं समर्थ इत्याशयेन स्तौति तेन त्रिविधेन ब्रह्मणो निर्द्देशेन ब्राह्मणाश्च वेदाश्च यज्ञाश्च पुरा सृष्ट्यादौ विहिता विधात्रा निर्म्मिताः सगुणीकृता इति वा, यद्वा यस्यायं त्रिविधो निर्द्देशस्तेन परमात्मना ब्राह्मणादयः पवित्रतमाः सृष्टाश्च तस्मात् तस्यायं निर्द्देशोऽतिप्रशस्त इत्यर्थः ॥२३॥

इदानीं प्रत्येकमोङ्कारादीनां प्राशस्त्यं दर्शयिष्यन्नोङ्कारस्य तदेवाह तस्मादिति। यस्मादेवं ब्रह्मणो निर्द्देशः प्रशस्तस्तस्मादोमित्युदाहृत्य तदुच्चार्य्य कृत्वा वेदवादिनां यज्ञाद्याः शास्त्रोक्ताश्च क्रियाः सततं सर्व्वदा अङ्गवैकल्येऽपि प्रकर्षेण वर्त्तन्ते सगुणा भवन्तीत्यर्थः ॥ २४ ॥

द्वितीयं नाम स्तौति तदिति। उदाहृत्येति पूर्व्वस्यानुषङ्गः तदित्युदाहृत्य उच्चार्य्य शुद्धचित्तैर्मोक्षकाङ्क्षिभिः पुरुषैः फलाभिसन्धिमकृत्वा यज्ञाद्याः क्रियाः क्रियन्ते अतश्चित्तशोधनद्वारा फलसङ्कल्पत्याजनेन सुसगुणत्वसम्पादकत्वात् तच्छब्दनिर्द्देशः प्रशस्तइत्यर्थः ॥२५॥

सच्छब्दस्य प्राशस्त्यमाह सद्भाव इति द्वाभ्याम्। सद्भावे अस्तित्वे देवदत्तस्य पुत्रादिकमस्तीत्यस्मिन्नर्थे साधुभावे च साधुत्वे देवदत्तस्य पुत्रादि श्रेष्ठमित्यस्मिन्नर्थे सदित्येतत् पदं प्रयुज्यते। प्रशस्ते माङ्गलिके विवाहादिकर्म्मणि च सदिदं कर्म्मेति सच्छब्दो युज्यते सङ्गच्छत इति वा। किञ्च यज्ञ इति। यज्ञादिषु स्थिति-

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् ।
असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह ॥ २८

इति श्रीमद्भगवद्गीतासूपनिषत्सु श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

स्तात्पर्य्येणावस्थानं तदपि सदित्युच्यते। यस्य चेदं नामत्रयं स एव परमात्मा, अर्थः फलं यस्य तत् तदर्थं कर्म्म पूजोपहारगृहाङ्गण-परिमार्ज्जनोपलेपनरङ्गमाङ्गलिकादिक्रिया तत्सिद्धये यदन्यत् कर्म्म क्रियते उद्यानशालिक्षेत्रधनार्ज्जनादिविषयं तत्कर्म्म तदर्थीयं तच्चाति-व्यवहितमपि सदित्येवाभिधीयते। यस्मादेवमतिप्रशस्तमेतन्नामत्रयं, तस्मादेतत् सर्व्वकर्म्मसादगुण्यार्थं सङ्कीर्त्तयेदिति तात्पर्य्यार्थः। अत्र चार्थवादानुपपत्त्या विधिः कल्प्यते विधेयं स्तूयते वस्त्विति न्यायात्। अपरे तु प्रवर्त्तन्ते विधानोक्ताः क्रियन्ते मोक्षकाङ्क्षिभिरित्यादि वर्त्तमानोपदेशाः समिधो यजतीत्यादिवद्विधितया परिणमनीय इत्याहुस्तत्तु सद्भावे साधुभावे चेत्यादिषु प्राशस्त्यर्थत्वान्न सङ्गच्छत इति पूर्व्वोक्तक्रमेण विधिकल्पनैव ज्यायसी ॥ २६ ॥ २७ ॥

इदानीं सर्व्वकर्म्मसु श्रद्धयैव प्रवृत्त्यर्थमश्रद्धया कृतं सर्व्वं निन्दति अश्रद्धयेति। अश्रद्धया हुतं हवनं दत्तं दानं तपस्तप्तं निर्व्वर्त्तितं यच्चान्यदपि कृतं तत् सर्व्वमसदित्युच्यते, यतस्तत् प्रेत्य लोकान्तरे न फलति विगुणत्वात् नो इह न चास्मिन् लोके फलति अयशस्करत्वात् ॥ २८ ॥

रजस्तमोमयीं त्यक्त्वा श्रद्धां सत्त्वमयीं श्रितः ।
तत्त्वज्ञानेऽधिकारी स्यादिति सप्तदशे स्थितम् ॥

इति श्रीधरस्वामिकृतायां टीकायां सप्तदशोऽध्यायः ॥ १७ ॥

# अष्टादशोऽध्यायः।

अर्ज्जुन उवाच।

सन्न्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश पृथक् केशिनिसूदन॥ १

श्रीभगवानुवाच।

काम्यानां कर्म्मणां न्यासं सन्न्यासं कवयो विदुः।

---

न्यासत्यागविभागेन सर्व्वगीतार्थसंग्रहम्।
स्पष्टमष्टादशे प्राह परमार्थविनिर्णये॥

अत्र च, "सर्व्वकर्म्माणि मनसा संन्यस्यास्ते सुखं वशी। संन्यास-योगयुक्तात्मा त्यादिषु कर्म्मसन्न्यास उपदिष्टस्तथा "त्यक्त्वा कर्म्मफलासङ्गं नित्यतृप्तो निराश्रयः। सर्व्वकर्म्मफलत्यागं ततः कुरु यतात्मवान्" इत्यादिषु च फलमात्रत्यागेन कर्म्मानुष्ठानमुपदिष्टं, न च परस्परविरुद्धं सर्व्वज्ञः परमकारुणिको भगवानुपदिशेत् अतः कर्म्मसन्न्यासस्य तदनुष्ठानस्य चाविरोधप्रकारं बुभुत्सरर्ज्जुन उवाच सन्न्यासस्येति। भो हृषीकेश सर्व्वेन्द्रियनियामक हे केशिनिसूदन केशिनाम्नो महतो हयाकृतेर्दैत्यस्य युद्धे मुखं व्यादाय भक्षितुमिच्छतोऽत्यन्तं व्यात्तमुखे वामबाहुं प्रवेश्य तत्क्षणमेव विवृद्धेन तेनैव बाहुना कर्कटिकाफलवत् तं विदार्य्य निसूदितवान्, अतएव हे महाबाहो इति सम्बोधनं, सन्न्यासस्य त्यागस्य च तत्त्वं पृथक् विवेकेन वेदितुमिच्छामि॥ १॥

ततोत्तरं श्रीभगवानुवाच काम्यानामिति। काम्यानां पुत्र-कामो यजेत स्वर्गकामो यजेतेत्यादिकामोपबन्धेन विहितानां कर्म्मणां

सर्व्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २

---

न्यासं परित्यागं सन्न्यासं कवयो विदुः सम्यक्‌फलैः सह कर्म्मणामपि न्यासं सन्न्यासं पण्डिता जानन्तीत्यर्थः। सर्व्वेषां काम्यानाञ्च कर्म्मणां फलमात्रत्यागं प्राहुस्त्यागं विचक्षणा निपुणाः न तु स्वरूपतः कर्म्म-त्यागम्। ननु नित्यनैमित्तिकानां फलाश्रवणादविद्यमानस्य फलस्य कथं त्यागः स्यात्, नहि वन्ध्यायाः पुत्त्रत्यागः सम्भवति, उच्यते, यद्यपि स्वर्गकामः पशुकाम इत्यादिवत् अहरहः सन्ध्यामुपासीत यावज्जीवमग्निहोत्रं जुहोतीत्यादिषु फलविशेषो न श्रूयते तथाप्य-पुरुषार्थे व्यापारे प्रेक्षावन्तं प्रवर्त्तयितुमशक्नुवन्, विधिर्विश्वजिता यजेतेत्यादिष्विव सामान्यतः किमपि फलमाक्षिपत्येव। न चातीव-गुरुमतः श्रद्धया स्वसिद्धिरेव विधेः प्रयोजनं मन्तव्यं पुरुषप्रवृत्त्य-नुपपत्तेर्दुष्परिहरत्वात्। श्रूयते च नित्यादावपि फलं सर्व्वे एते पुण्यलोका भवन्तीति, कर्म्मणा पितृलोक इति, धर्म्मेण पाप-मपनुदतीत्यादिषु। तस्माद्युक्तमुक्तं सर्व्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणा इति। ननु फलत्यागे पुनरपि निष्फलेषु कर्म्मसु प्रवृत्तिरेव न स्यात्, तन्न, सर्व्वेषां कर्म्मणां संयोगपृथक्त्वेन विविदिषार्थतया विनियोगात्। तथा च श्रुतिः;—"तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" इति। ततश्च श्रुतिप्रोक्तं सर्व्वं फलं बन्धकत्वेन त्यक्त्वा विविदिषार्थं सर्व्वकर्म्मानुष्ठानं घटत एव। विविदिषा च नित्यानित्यवस्तुविवेकेन निवृत्तदेहाद्यभि-मानतया बुद्धेः प्रत्यक्‌प्रवणता तावत्पर्य्यन्तञ्च सत्त्वशुद्ध्यर्थं ज्ञाना-विरुद्धं यथोचितमावश्यकं कर्म्म कुर्व्वतस्तत्फलत्याग एव कर्म्मत्यागो नाम, न स्वरूपेण। तथा च श्रुतिः;—"कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः" इति। ततः परन्तु सर्व्वकर्म्मनिवृत्तिः स्वत-

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।**
**यज्ञदानतपः कर्म न त्याज्यमिति चापरे॥ ३**

एव भवति। तदुक्तं नैष्कर्म्यसिद्धौ,—"प्रत्यक्प्रवणतां बुद्धेः कर्म्माण्युत्पाद्य शुद्धितः। कृतार्थान्यस्तमायान्ति प्राटृडन्ते घना इव।" उक्तञ्च भगवता यस्त्वात्मरतिरेव स्यादित्यादि। वशिष्ठेन चोक्तं,—"न कर्म्माणि त्यजेद्योगी कर्म्मभिस्त्यज्यते ह्यसौ" इति। ज्ञाननिष्ठाविक्षेपकत्वमालच्य त्यजेद्वा। तदुक्तं श्रीभागवते,—"तावत् कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता। मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते। ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः। सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः।" इत्यादि। अलमति-प्रसङ्गेन प्रकृतमनुसरामः, अविदुषः फलत्यागमात्रमेव त्यागशब्दार्थो न कर्म्मत्याग इति॥ २॥

एतदेव मतान्तरनिरासेन दृढ़ीकर्त्तुं मतभेदं दर्शयति त्याज्यमिति। दोषवद्धिंसादिदोषवत्त्वेन बन्धकमिति हेतोः सर्व्व-मपि कर्म्म त्याज्यमित्येके सांख्याः प्राहुर्मनीषिण इति। अस्यायं भावः, मा हिंस्यात् सर्व्वभूतानीति निषेधः पुरुषस्यानर्थहेतुर्हिंस-त्याह अग्नीषोमीयं पशुमालभेतेत्यादिप्राकरणिको विधिस्तु हिंसायाः क्रतूपकारत्वमाह अतोभिन्नविषयत्वेन सामान्यविशेषन्यायागोचर-त्वात् द्वयसाध्येषु सर्व्वेष्वपि कर्म्मसु हिंसादेः सम्भवात् सर्व्वमपि कर्म्म त्याज्यमेवेति। तदुक्तं, "दृष्टवदानुश्रविकः स ह्यविशुद्धि-क्षयातिशययुक्त" इति। अपरे तु मीमांसका यज्ञादिकं कर्म्म न त्याज्यमेवेति प्राहुः। अय भावः, क्रत्वर्थापि सतीयं हिंसा पुरुषेण कर्त्तव्या सा चान्योद्देशेनापि कृता पुरुषस्य प्रत्यवायहेतुरेव, तच्च विधिर्विधेयस्य तदुद्देशेनानुष्ठानं विधत्ते तादर्थ्यलक्षणत्व

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्त्तितः ॥ ४
यज्ञदानतपः कर्म्म न त्याज्यं कार्य्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६

---

नन्वेवं निषेधो निषेध्यस्य तादर्थ्यमपेक्षते प्राप्तिमात्रापेक्षत्वात् अन्यथा अज्ञानप्रमादादिकृते दोषाभावप्रसङ्गात्, समानविषयत्वेन सामान्य-शास्त्रस्य विशेषेण बाधा नास्ति दोषवत्त्वम् अतो नित्यं यज्ञादि कर्म्म न त्याज्यमिति ॥ २ ॥

एवं मतभेदमुपन्यस्य स्वमतं कथयितुमाह निश्चयं शृण्विति । तत्रैवं विप्रतिपन्ने त्यागे निश्चयं मे वचनाच्छृणु, त्यागस्य लोक-प्रसिद्धत्वात् किमत्र श्रोतव्यमिति मावमंस्था इत्याह हे पुरुषव्याघ्र पुरुषश्रेष्ठ त्यागो हि दुर्बोधः हि यस्मादयं कर्म्मत्यागस्तत्त्वविद्भि-स्तामसादिभेदेन त्रिविधः सम्यग्विवेकेन प्रकीर्त्तितः, त्रैविध्यञ्च नियतस्य तु सन्यासः कर्म्मण इत्यादिना वक्ष्यति ॥ ४ ॥

प्रथमं तावन्निश्चयमाह यज्ञेति द्वाभ्याम् । मनीषिणां विवे-किनां पावनानि चित्तशुद्धिकराणि ॥ ५ ॥

येन प्रकारेण कृतान्येतानि पावनानि भवन्ति तत्प्रकारं दर्शयन्नाह एतान्यपीति । यानि यज्ञादीनि कर्म्माणि मया पावनानीत्युक्तान्येतान्यप्येवं कर्त्तव्यानि कथं, सङ्गं कर्त्तृत्वाभिनिवेशं त्यक्त्वा केवलमीश्वराधीनतया कर्त्तव्यानि, फलानि च त्यक्त्वा कर्त्तव्या-नीति मे मतं निश्चितम् अतएवोत्तमम् ॥ ६ ॥

नियतस्य तु सन्न्यासः कर्म्मणो नोपपद्यते।
मोहात् तस्य परित्यागस्तामसः परिकीर्त्तितः॥ ७
दुःखमित्येव यत् कर्म्म कायक्लेशभयात् त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥ ८
कार्य्यमित्येव यत् कर्म्म नियतं क्रियतेऽर्ज्जुन।
सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः॥ ९
न द्वेष्ट्यकुशलं कर्म्म कुशले नानुषज्जते।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः॥ १०

---

प्रतिज्ञातं त्यागत्रैविध्यमिदानीं दर्शयति नियतस्येति त्रिभिः। काम्यस्य कर्म्मणो बन्धकत्वात् सन्न्यासो युक्तः नियतस्य तु नित्यस्य पुनः कर्म्मणः सन्न्यासस्त्यागो नोपपद्यते सत्त्वशुद्धिद्वारा मोक्षहेतुत्वात् अतस्तस्य परित्याग उपादेयत्वेऽपि त्याज्यमित्येवं लक्षणान्मोहादेव भवेत् स च मोहस्य तामसत्वात् तामसः परिकीर्त्तितः॥ ७॥

राजसं त्यागमाह दुःखमिति। दुःखमित्येवं मत्वा शरीरायासभयान्नित्यं कर्म्म त्यजेदिति यत्ताद्दशस्त्यागो राजसो दुःखस्य राजसत्वात्, अतस्तं राजसं त्यागं कृत्वा स राजसः पुरुषस्त्यागफलं ज्ञाननिष्ठालक्षणं नैव लभत इत्यर्थः॥ ८॥

सात्त्विकं त्यागमाह कार्य्यमिति। कार्य्यमित्येव बुद्धा नियतमवश्यकर्त्तव्यतया विहितं कर्म्म सङ्गं फलञ्च त्यक्त्वा क्रियत इति यत् ताद्दशस्त्यागः सात्त्विको मतः॥ ९॥

एवम्भूतसात्त्विकत्यागपरिनिष्ठितस्य लक्षणमाह न द्वेष्टीत्यादि। सत्त्वसमाविष्टः सत्त्वेन व्याप्तः सात्त्विकत्यागी अकुशलं दुःखावहं शिशिरे प्रातःस्नानादिकं कर्म्म न द्वेष्टि कुशले च सुखकरे कर्म्मणि निदा मध्याह्नस्नानादौ नानुषज्जते प्रीतिं न करोति।

न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः ।
यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११
अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्म्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ॥ १२

---

मेधावी स्थिरबुद्धिः यत्र परपरिभवादि महदपि दुःखं सहते स्वर्गादिसुखञ्च त्यजति तत्र कियदेतत् तात्कालिकं सुखं दुःखञ्चेत्येवमनुसन्धानवानित्यर्थः । अतएव छिन्नः संशयो मिथ्याज्ञानं दैहिकसुखदुःखयोस्तत्पादित्वापरिच्छिन्नीर्यलक्षणं यस्य सः ॥ १० ॥

नन्वेम्भूतात् कर्म्मफलत्यागादरं सर्व्वकर्म्मत्यागस्तथा सति कर्म्मविक्षेपाभावेन ज्ञाननिष्ठासुखं संपद्यते तत्राह न हीति । देहभृता देहाभिमानवता निःशेषेण सर्व्वाणि कर्म्माणि त्यक्तुं न हि शक्यानि । तदुक्तं, न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृदित्यादिना । तस्माद्यस्तु कर्म्माणि कुर्व्वन्नपि कर्म्मफलत्यागी स एव मुख्यः त्यागीत्यभिधीयते ॥ ११ ॥

एवम्भूतस्य कर्म्मफलत्यागस्य फलमाह अनिष्टमिति । अनिष्टं नारकित्वम् इष्टं देवत्वं मिश्रं मनुष्यत्वम् एवं त्रिविधं पापस्य पुण्यस्य चोभयमिश्रस्य च कर्म्मणो यत् फलं प्रसिद्धं तत् सर्व्वमत्यागिनां सकामानामेव प्रेत्य परत्र भवति तेषां त्रिविधकर्म्मसम्भवात् न तु सन्न्यासिनां क्वचिदपि भवति । सन्न्यासिशब्देनात्र फलत्यागसाम्यात् प्रकृताः कर्म्मफलत्यागिनो गृह्यन्ते, अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः । स सन्न्यासी च योगी चेत्येवमादौ कर्म्मफलत्यागिषु सन्न्यासिशब्दप्रयोगदर्शनात् । तेषां सात्त्विकानां पापासम्भवादीश्वरार्पणेन च पुण्यफलस्य त्यक्तत्वात् त्रिविधमपि कर्म्मफलं न भवतीत्यर्थः ॥ १२ ॥

पञ्चैमानि महाबाहो कारणानि निबोध मे।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्व्वकर्म्मणाम्॥ १३
अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम्।
विविधाश्च पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम्॥ १४
शरीरवाङ्मनोभिर्यत् कर्म्म प्रारभते नरः।

---

ननु कर्म्म कुर्व्वतः कर्म्मफलं कथं न भवेदित्याशङ्क्य सङ्गत्यागिनो निरहङ्कारस्य कर्म्मलेपो नास्तीत्युपपादयितुमाह पञ्चेति पञ्चभिः। सर्व्वकर्म्मणां सिद्धये निष्पत्तये इमानि वक्ष्यमाणानि पञ्च कारणानि मे वचनान्निबोध जानीहि। आत्मनः कर्त्तृत्वाभिमाननिवृत्त्यर्थमवश्यमेतानि ज्ञातव्यानीत्येवं तेषां स्तुत्यर्थमेवाह सांख्य इति। सम्यक् ख्यायते ज्ञायते परमात्मा अनेनेति सांख्यं तत्त्वज्ञानं तस्मिन् प्रकाशमान आत्मबोधः सांख्यः, तस्मिन् कृतं कर्म्म तस्यान्तः समाप्तिरस्मिन्निति कृतान्तस्तस्मिन् वेदान्तसिद्धान्त इत्यर्थः। यद्वा, संख्यायन्ते गण्यन्ते तत्त्वान्यस्मिन्निति सांख्यं कृतोऽन्तो निर्णयोऽस्मिन्निति कृतान्तं सांख्यशास्त्रमेव तस्मिन् प्रोक्तानि अतः सम्यक् निबोधेत्यर्थः॥ १३॥

तान्येवाह अधिष्ठानमिति। अधिष्ठानं शरीरं, कर्त्ता चिदचिद्ग्रन्थिरहङ्कारः, पृथग्विधमनेकप्रकारं करणं चक्षुःश्रोत्रादि, विविधाः कार्य्यतः स्वरूपतश्च पृथग्भूताश्चेष्टाः प्राणापानादीनां व्यापारा, अत्र एतेष्वेव पञ्चमं दैवं चक्षुराद्यनुग्राहकमादित्यादिसर्व्वप्रेरकोऽन्तर्यामी वा॥ १४॥

एतेषामेव सर्व्वकर्म्महेतुत्वमाह शरीरेति। यथोक्तैः पञ्चभिः प्रारभ्यमाणं कर्म्म विध्विवान्तर्भाव्य शरीरवाङ्मनोभिरित्युक्तं, शारीरं

न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५

तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्म्मतिः ॥ १६

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमांल्लोकान् न हन्ति न निबध्यते ॥ १७

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्म्मचोदना ।

---

वाचिकं मानसञ्च त्रिविधं कर्म्मेति प्रसिद्धं, शरीरादिभिर्यत् कर्म्म धर्म्म्यमधर्म्म्यं वा करोति नरस्तस्य सर्व्वस्य कर्म्मण एते पञ्च हेतवः ॥ १५ ॥

ततः किमत आह तत्रेति । तत्र सर्व्वस्मिन् कर्म्मणि एते पञ्च हेतव इत्येवं सति केवलं निरुपाधिमसङ्गमात्मानं यः कर्त्तारं पश्यति शास्त्राचार्य्योपदेशाभ्यामसंस्कृतबुद्धित्वात् दुर्म्मतिरसौ सम्यक् न पश्यति ॥ १६ ॥

कस्तर्हि सुमतिर्यस्य कर्म्मलेपो नास्तीत्युक्तमित्यपेक्षायामाह यस्येति । अहमिति कृतोऽहङ्कर्त्तेत्येवम्भूतो भावोऽभिप्रायो यस्य नास्ति, यद्वा अहं कृतोऽहङ्कारस्य भावः स्वभावः कर्त्तृत्वाभिनिवेशोयस्य नास्ति शरीरादीनामेव कर्म्मकर्त्तृत्वालोचनादित्यर्थः, अतएव यस्य बुद्धिर्न लिप्यते इष्टानिष्टबुद्ध्या कर्म्मसु न सज्जते स एवम्भूतो देहादि-व्यतिरिक्तात्मदर्शी इमान् लोकान् सर्व्वानपि प्राणिनो लोकदृष्ट्या हत्वापि विविक्ततया स्वदृष्ट्या न हन्ति न च तत्फलैर्निबध्यते बन्धनं प्राप्नोति किं पुनः सत्त्वशुद्धिद्वारा परोक्षज्ञानोत्पत्तिहेतुभिः कर्म्मभिस्तस्य बन्धाशङ्केत्यर्थः । तदुक्तं, ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसेति ॥१७॥

हत्वापि न हन्ति न निबध्यत इत्येतदेवोपपादयितुं कर्म्म-

करणं कर्म्म कर्त्तेति त्रिविधः कर्म्मसंग्रहः ॥ १८

ज्ञानं कर्म्म च कर्त्ता च त्रिधैव गुणभेदतः।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९

---

चोदनायाः कर्माश्रयस्य च कर्म्मफलादीनाञ्च त्रिगुणात्मकत्वान्निर्गुणस्य आत्मनस्तत्सम्बन्धो नास्तीत्यभिप्रायेण कर्म्मचोदनां कर्म्माश्रयञ्चाह ज्ञानमिति। ज्ञानमिष्टसाधनमेतदिति बोधः, ज्ञेयमिष्टसाधनं कर्म्म, परिज्ञाता एतज्ज्ञानाश्रयः एवं त्रिविधा कर्म्मचोदना चोद्यते प्रवर्त्ततेऽनयेति चोदना ज्ञानादित्रितयं कर्म्मप्रवृत्तिहेतुरित्यर्थः। यद्वा, चोदनेति विधिरुच्यते तदुक्तं भट्टैः,—"चोदना, चोपदेशश्च विधिश्चैकार्थवाचिन" इति। ततश्चायमर्थः, उक्तलक्षणं त्रिगुणात्मकं ज्ञानादित्रयमवलम्ब्य कर्म्मविधिः प्रवर्त्तत इति तदुक्तं त्रैगुण्यविषया वेदा इति, तथा करणं साधकतमं, कर्म्म च कर्त्तुरीप्सिततमं, कर्त्ता क्रियानिर्व्वर्त्तकः, कर्म्म संगृह्यतेऽस्मिन्निति कर्म्मसंग्रहः करणादित्रिविधं कारकं क्रियाश्रय इत्यर्थः। सम्प्रदानादिकारकत्रयन्तु परम्परया क्रियाप्रवर्त्तकमेव केवलं न तु साक्षात् क्रियाया आश्रयः अतः करणादित्रयमेव क्रियाश्रय इत्युक्तम् ॥ १८ ॥

ततः किमत आह ज्ञानं कर्म्म चेति। गुणाः सम्यक् कार्य्यभेदेन ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति गुणसंख्यानं सांख्यशास्त्रं तस्मिन् ज्ञानञ्च कर्म्म च कर्त्ता च प्रत्येकं सत्त्वादिगुणभेदेन त्रिधैवोच्यते, तान्यपि ज्ञानादीनि वक्ष्यमाणानि यथावच्छृणु, त्रिधैवेत्येवकारो गुणत्रयोपाधिव्यतिरेकेणात्मनः स्वतः कर्म्मादिप्रतिषेधार्थः, चतुर्द्दशाध्याये तत्र सत्त्वं निर्म्मलत्वादित्यादिना गुणानां बन्धकत्वप्रकारो निरूपितः, सप्तदशाध्याये यजन्ते सात्त्विका देवानित्य· गुणकृतत्रिविधस्वभावनिरूपणेन रजस्तमःस्वभावं परित्यज्य सात्त्विका

सर्व्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २०

पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्।
वेत्ति सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१

यत् तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहैतुकम्।
अतत्त्वार्थवदल्पञ्च तत् तामसमुदाहृतम् ॥ २२

नियतं सङ्गरहितमरागद्वेषतः कृतम्।

---

द्वारादिसेवया सात्त्विकस्वभावः सम्पादनीय इत्युक्तम्, इह तु क्रियाकारकफलादीनामात्मसम्बन्धो नास्तीति दर्शयितुं सर्व्वेषां त्रिगुणात्मकत्वमुच्यत इति विशेषो ज्ञातव्यः ॥ १९ ॥

तत्र ज्ञानस्य सात्त्विकादित्रैविध्यमाह सर्व्वेति त्रिभिः। सर्व्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु विभक्तेषु परस्परं व्यावृत्तेषु अविभक्तमनुस्यूतम् एकमव्ययं निर्व्विकारं भावं परमात्मतत्त्वं येन ज्ञानेनेक्षते आलोचयति तत् ज्ञानं सात्त्विकं विद्धि ॥ २० ॥

राजसं ज्ञानमाह पृथक्त्वेनेति। पृथक्त्वेन तु यत् ज्ञानमित्यस्यैव विवरणं सर्व्वेषु भूतेषु देहे नानाभावान् वस्तुत एवानेकान् क्षेत्रज्ञान् पृथग्विधान् सुखिदुःखित्वादिरूपेण विलक्षणान् येन ज्ञानेन वेत्ति तत् ज्ञानं राजसं विद्धि ॥ २१ ॥

तामसं ज्ञानमाह यत् त्विति। एकस्मिन् कार्य्ये देहे प्रतिमादौ वा कृत्स्नवत् परिपूर्णवत् सक्तम् एतावानेवात्मा ईश्वरो वेत्यभिनिवेशयुक्तम् अहैतुकं निरुपपत्तिकम् अतत्त्वार्थवत् परमार्थालम्बनशून्यम् अतएवाल्पं तुच्छम् अल्पविषयत्वात् अल्पफलत्वाच्च यदेवम्भूतं ज्ञानं तत् तामसमुदाहृतम् ॥ २२ ॥

इदानीं त्रिविधं कर्म्माह नियतमिति त्रिभिः। नियतं नित्यतया

अफलप्रेप्सुना कर्म्म यत् तत् सात्त्विकमुच्यते॥ २३
यत् तु कामेप्सुना कर्म्म साहङ्कारेण वा पुनः।
क्रियते बहुलायासं तद्राजसमुदाहृतम्॥ २४
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्।
मोहादारभ्यते कर्म्म यत् तत् तामसमुच्यते॥ २५
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्न्निर्व्विकारः कर्त्ता सात्त्विक उच्यते॥ २६

---

विहितं सङ्गरहितमभिनिवेशशून्यम् अरागद्वेषतः पुत्त्रादिप्रीत्या वा शत्रुद्वेषेण वा यत् कृतं न भवति फलं प्राप्तुमिच्छतीति फलप्रेप्सुस्तद्विलक्षणेन निष्कामेण कर्त्रा यत् कृतं कर्म्म तत् सात्त्विकमुच्यते॥ २३॥

राजसं कर्म्माह यत् त्विति। यत् तु कर्म्म कामेप्सुना फलं प्राप्तुमिच्छता साहङ्कारेण वा मत्समः कोऽन्यः श्रोत्रियोऽस्तीत्येवं निरूढ़ाहङ्कारयुक्तेन च क्रियते तच्च पुनर्ब्बहुलायासमतिक्लेशयुक्तं तत् कर्म्म राजसमुदाहृतम्॥ २४॥

तामसं कर्म्माह अनुबन्धमिति। अनुबध्यत इत्यनुबन्धं पश्चाद्भावि शुभाशुभं क्षयं वित्तक्षयं हिंसां परपीड़ां पौरुषञ्च स्वसामर्थ्यमनपेक्ष्यापर्य्यालोच्य केवलं मोहादेव यत् कर्म्मारभ्यते तत् तामसमुदाहृतम्॥ २५॥

कर्त्तारं त्रिविधमाह मुक्तसङ्ग इति त्रिभिः। मुक्तसङ्गस्त्यक्ताभिनिवेशः अनहंवादी गर्व्वोक्तिरहितः धृतिर्धैर्य्यम् उत्साह उद्यमस्ताभ्यां समन्वितः संयुक्तः आरब्धस्य कर्म्मणः सिद्धावसिद्धौ च निर्व्विकारो हर्षविषादशून्यः स एवम्भूतः कर्त्ता सात्त्विक उच्यते॥ २६॥

रागी कर्म्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः।
हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः॥ २७

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः।
विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते॥ २८

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय॥ २९

प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी॥ ३०

---

राजसं कर्त्तारमाह रागीति। रागी पुत्रादिप्रीतिमान् कर्म्मफलप्रेप्सुः कर्म्मफलकामी लुब्धः परस्वाभिलाषी हिंसात्मको मारस्वभावः, अशुचिः विहितशौचशून्यः, लाभालाभयोर्हर्षशोकाभ्यां समन्वितः कर्त्ता राजसः॥ २७॥

तामसं कर्त्तारमाह अयुक्त इति। अयुक्तोऽनभिहितः प्राकृतो विवेकशून्यः स्तब्धोऽनम्रः शठः शक्तिगूहनकारी नैष्कृतिकः परापमानी अलसोऽनुद्यमशीलः विषादी शोकशीलः यदद्य श्वो वा कर्त्तव्यं तन्मासेनापि न सम्पादयति यः स दीर्घसूत्री एवम्भूतः कर्त्ता तामसः। कर्तृत्रैविध्येनैव ज्ञातुरपि त्रैविध्यमुक्तं कर्म्मत्रैविध्येन च ज्ञेयस्यापि त्रैविध्यमुक्तं ज्ञातव्यं बुद्धेस्त्रैविध्येन च करणस्याप्युक्तं भविष्यति॥ २८॥

इदानीं बुद्धेर्धृतेश्च त्रैविध्यं प्रतिजानीते बुद्धेर्भेदमिति। स्पष्टोऽर्थः॥ २९॥

तत्र बुद्धेस्त्रैविध्यमाह। प्रवृत्तिं धर्म्मे निवृत्तिमधर्म्मे यस्मिन् देशे काले च यत् कार्य्यमकार्य्यञ्च भयाभये कार्य्याकार्य्यनिमित्तौ अर्थानर्थौ कथं बन्धः कथं वा मोक्ष इति या बुद्धिरन्तःकरणं वेत्ति

यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१
अधर्म्मं धर्म्ममिति या मन्यते तमसावृता।
सर्व्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२
धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३
यया तु धर्म्मकामार्थान् धृत्या धारयतेऽर्ज्जुन।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४

---

सा सात्त्विकी। यया पुमान् वेत्तीति वक्तव्ये करणे कर्त्तृत्वोपचारः काष्ठानि पचन्तीतिवत् ॥ ३० ॥

राजसीं बुद्धिमाह ययेति। अयथावत् सन्देहास्पदत्वेनेत्यर्थः। स्पष्टमन्यत् ॥ ३१ ॥

तामसीं बुद्धिमाह अधर्म्ममिति। विपरीतग्राहिणी बुद्धिस्तामसीत्यर्थः। बुद्धिरन्तःकरणं पूर्व्वोक्तं ज्ञानं तद्वृत्तिः धृतिरपि तद्वृत्तिरेव। यद्वा, अन्तःकरणस्य धर्म्मिणो बुद्धिरध्यवसायलक्षणा वृत्तिरेव इच्छाद्वेषादीनां तद्वृत्तीनां वहुत्वेऽपि धर्म्माधर्म्मभयाभयसाधनत्वेन प्राधान्यादेतासां त्रैविध्यमुक्तम् उपलक्षणञ्चैतदन्यासाम् ॥ ३२ ॥

इदानीं धृतेस्त्रैविध्यमाह धृत्येति त्रिभिः। योगेन चित्तैकाग्र्येण हेतुनाऽव्यभिचारिण्या विषयान्तरमधारयन्त्या यया धृत्या मनसः प्राणस्य इन्द्रियाणाञ्च क्रिया धारयते नियच्छति, सा धृतिः सात्त्विकी ॥ ३३ ॥

राजसीं धृतिमाह यया त्विति। यया तु धृत्या धर्म्मार्थकामान् प्राधान्येन धारयते न विमुञ्चति तत्प्रसङ्गेन तत्फलाकाङ्क्षी च भवति सा राजसी धृतिः ॥ ३४ ॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्म्मेधा धृतिः सा पार्थ तामसी ॥ ३५

सुखन्त्विदानीं त्रिविधं शृणु मे भरतर्षभ ॥ ३६

अभ्यासाद्रमते यत्र दुःखान्तञ्च निगच्छति ।
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७

विषयेन्द्रियसंयोगाद् यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥ ३८

---

तामसीं धृतिमाह ययेति । दुष्टा अविवेकबहुला मेधा यस्य स दुर्म्मेधाः पुरुषो यया धृत्या स्वप्नादीन् न विमुञ्चति पुनःपुनरावर्त्तयति, स्वप्नोऽत्र निद्रा, सा धृतिस्तामसी ॥ ३५ ॥

इदानीं सुखस्य त्रैविध्यं प्रतिजानीते सुखन्त्विति । स्पष्टोऽर्थः ॥३६

तत्र सात्त्विकं सुखमाह अभ्यासादिति सार्द्धेन । यत्र यस्मिन् सुखे अभ्यासाद्रमते न तु विषयसुख इव सहसा रतिं प्राप्नोति, यस्मिन् रममाणश्च दुःखस्यान्तमवसानं नितरां गच्छति प्राप्नोति । कीदृशं यत्तत् किमपि अग्रे प्रथमं विषमिव मनःसंयमाधीनत्वा-द्दुःखावहमिव भवति, परिणामे त्वमृतसदृशम् आत्मविषया बुद्धि-रात्मबुद्धिस्तस्याः प्रसादो रजस्तमोमयतात्यागेन स्वच्छतयावस्थानं ततो जातं यत् सुखं तत् सात्त्विकं प्रोक्तं योगिभिः ॥ ३७ ॥

राजसं सुखमाह विषयेति । विषयाणामिन्द्रियाणाञ्च संयोगात् यत्तत् प्रसिद्धं स्त्रीसंसर्गादिसुखम् अमृतमुपमा यस्य तादृशं भवति अग्रे प्रथमं परिणामे च विषतुल्यम् इहामुत्र च दुःखहेतुत्वात् तत् सुखं राजसं स्मृतम् ॥ ३८ ॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः।
निद्रालस्यप्रमादोत्थं तत् तामसमुदाहृतम् ॥ ३९

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ ४०

ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परन्तप।
कर्म्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१

---

तामसं सुखमाह यदिति। अग्रे च प्रथमक्षणे अनुबन्धे च पश्चादपि यत् सुखमात्मनो मोहकरं तदेवाह निद्रा च आलस्यञ्च प्रमादश्च कर्त्तव्यावधानराहित्येन मनोग्राह्यमेतेभ्य उत्तिष्ठति यत् सुखं तत् तामसमुदाहृतम् ॥ ३९ ॥

अनुक्तमपि संगृह्णन् प्रकरणार्थमुपसंहरति न तदिति त्रिभिः। एभिः प्रकृतिसंभवः सत्त्वादिभिर्गुणैर्मुक्तं हीनं सत्त्वं प्राणिजातम् अन्यद्वा यत् स्यात् तत् पृथिव्यां मनुष्यादिषु दिवि देवेषु च क्वापि नास्तीत्यर्थः ॥ ४० ॥

ननु यद्येवं सर्व्वमपि क्रियाकारकफलादिकं प्राणिजातञ्च त्रिगुणात्मकमेव, तर्हि कथमस्य मोक्ष इत्यपेक्षायां स्वस्वाधिकारेण विहितैः कर्म्मभिः परमेश्वराराधनात् तत्प्रसादलब्धज्ञानेनैवेवं सर्व्व-गीतार्थसारं संगृह्य दर्शयितुं प्रकारान्तरमारभते ब्राह्मणेत्यादि यावदध्यायसमाप्ति। हे परन्तप हे शत्रुतापन ब्राह्मणानां क्षत्रियाणां वैश्यानां शूद्राणाञ्च कर्म्माणि प्रविभक्तानि प्रकर्षेण विभागतो विहितानि, शूद्राणां समासात् पृथक्करणं द्विजत्वाभावेन वैलक्षण्यात् विभागोपलक्षणमाह स्वभावः सात्त्विकराजसादिः प्रभवति प्रादुर्भवति येभ्यस्तैर्गुणैरुपलक्षणभूतैः। यद्वा, स्वभाव-प्रभवैः पूर्व्वजन्मसंस्कारप्रादुर्भूतैरित्यर्थः। तत्र सत्त्वप्रधाना ब्राह्मणाः,

शमो दमस्तपः शौचं क्षान्तिरार्ज्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजम् ॥ ४२
शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रकर्म्म स्वभावजम् ॥ ४३
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म्म स्वभावजम्।
परिचर्य्यात्मकं कर्म्म शूद्रस्यापि स्वभावजम् ॥ ४४
स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः ॥ ४५

---

सत्त्वोपसर्ज्जनरजःप्रधानाः क्षत्रियाः, तमउपसर्ज्जनरजःप्रधाना वैश्याः, रजउपसर्ज्जनतमःप्रधानाः शूद्राः ॥ ४१ ॥

तत्र ब्राह्मणस्य स्वाभाविकानि कर्म्माण्याह शम इति। शमश्चित्तोपरमः दमो वाह्येन्द्रियोपरमः तपः पूर्व्वोक्तं शारीरादि शौचं वाह्याभ्यन्तरं क्षान्तिः क्षमा आर्ज्जवमवक्रता ज्ञानं शास्त्रीयं विज्ञानमनुभवः आस्तिक्यमस्ति परलोक इति निश्चय एतच्छमादि ब्राह्मणस्य स्वभावाज्जातं कर्म्म ॥ ४२ ॥

क्षत्रियस्य स्वाभाविकं कर्म्माह शौर्य्यमिति। शौर्य्यं पराक्रमः तेजः प्रागल्भ्यं धृतिर्धैर्य्यं दाक्ष्यं कौशलं युद्धे चाप्यपलायनम् अपराङ्मुखता दानमौदार्य्यम् ईश्वरभावो नियमनशक्तिः एतत् क्षत्रियस्य स्वाभाविकं कर्म्म ॥ ४३ ॥

वैश्यशूद्रयोः कर्म्माह कृषीति। कृषिः कर्षणं गां रक्षतीति गोरक्षस्तस्य भावो गोरक्ष्यं पाशुपाल्यमित्यर्थः वाणिज्यं क्रयविक्रयादि एतद्वैश्यस्य स्वाभाविकं कर्म्म। त्रैवर्णिकपरिचर्य्यात्मकं शूद्रस्यापि स्वभावजं कर्म्म ॥ ४४ ॥

एवम्भूतस्यापि ब्राह्मणादिकर्म्मणो ज्ञानहेतुत्वमाह स्वे स्व इति।

स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु।
यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्।
स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥ ४६
श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्।
स्वभावनियतं कर्म्म कुर्व्वन् नाप्नोति किल्विषम्॥ ४७
सहजं कर्म्म कौन्तेय सदोषमपि न त्यजेत्।
सर्व्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥ ४८

---

स्वस्वाधिकारविहिते कर्म्मण्यभिरतः परिनिष्ठितो नरः संसिद्धिं ज्ञानयोग्यतां लभते॥ ४५॥

कर्म्मणा ज्ञानप्राप्तिप्रकारमाह स्वकर्म्मेति सार्द्धेन। स्वकर्म्मपरिनिष्ठितो यथा येन प्रकारेण तत्त्वज्ञानं लभते तं प्रकारं शृणु तमेवाह यत इति। यतोऽन्तर्य्यामिणः परमेश्वराद्भूतानां प्राणिनां प्रवृत्तिश्चेष्टा भवति, येनात्मना सर्व्वमिदं विश्वं ततं व्याप्तं तमीश्वरं स्वकर्म्मणाऽभ्यर्च्य पूजयित्वा सिद्धिं लभते मनुष्यः॥ ४६॥

स्वकर्म्मणेति विशेषणस्य फलमाह श्रेयानिति। विगुणोऽपि स्वधर्म्मः सम्यगनुष्ठितादपि परधर्म्मात् श्रेष्ठः, न च बन्धुवधादियुक्ताद्युद्धादेः स्वधर्म्माद्भिक्षाटनादिपरधर्म्मः श्रेष्ठ इति मन्तव्यं, यतः स्वभावेन पूर्व्वोक्तेन नियतं नियमेनोक्तं कर्म्म कुर्व्वन् किल्विषं नाप्नोति॥४७

यदि पुनः सांख्यदृष्ट्या स्वधर्म्मे हिंसालक्षणं दोषं मत्वा परधर्म्मं श्रेष्ठं मन्यसे तर्हि सदोषत्वं परधर्म्मेऽपि तुल्यमित्यभिप्रायेणाह सहजमिति। सहजं स्वभावविहितं कर्म्म सदोषमपि न त्यजेत्, हि यस्मात् सर्व्वेऽप्यारम्भदृष्टादृष्टानि सर्व्वाण्यपि कर्म्माणि दोषेण केनचिदावृता व्याप्ता एव, यथा सहजेन धूमेनाग्निरावृतस्तद्वत्, अतो यथाग्नेर्धूमरूपं दोषमपाकृत्य प्रताप एव तमःशीतादिनिवृत्तये

असक्तबुद्धिः सर्व्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ॥ ४९
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५०
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।

---

सेव्यते तथा कर्म्मणोऽपि दोषांशं विहाय गुणांश एव शुद्धये सेव्य इत्यर्थः ॥ ४८ ॥

ननु कर्म्मणि क्रियमाणे कथं दोषांशप्रहाणेन गुणांश एव संपद्यत इत्यपेक्षायामाह असक्तबुद्धिरिति । असक्ता सङ्गशून्या बुद्धिर्यस्य जितात्मा निरहङ्कारः विगता स्पृहा फलविषया यस्मात् स एवम्भूतः, सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मत इत्येवं पूर्व्वोक्तेन कर्म्मासक्तिफलयोस्त्यागलक्षणेन सन्न्यासेन नैष्कर्म्म्यसिद्धिं सर्व्वकर्म्मनिवृत्तिलक्षणां सत्त्वशुद्धिमधिगच्छति । यद्यपि सङ्ग-फलयोस्त्यागेन कर्म्मानुष्ठानमपि नैष्कर्म्म्यमेव कर्त्तृत्वाभिनिवेशा-भावात् । तदुक्तं नैव किञ्चित् करोमीति युक्तोमन्येत तत्त्व-विदित्यादिश्लोकचतुष्टयेन, तथाप्यनेनोक्तलक्षणेन सन्न्यासेन परमां नैष्कर्म्म्यसिद्धिं सर्व्वकर्म्माणि मनसा सन्न्यस्यास्ते सुखं वशीत्येवं-लक्षणां पारमहंस्यचर्य्यामाप्नोति ॥ ४९ ॥

एवम्भूतस्य पारमहंस्यज्ञाननिष्ठया ब्रह्मभावप्रकारमाह सिद्धिं प्राप्त इति षड्भिः । नैष्कर्म्म्यसिद्धिं प्राप्तः सन् यथा येन प्रकारेण ब्रह्म प्राप्नोति तथा तं प्रकारं संक्षेपेणैव मे वचनान्निबोध, प्रतिष्ठिता या ब्रह्मप्राप्तिस्तामिमां, तथा दर्शयितुमाह निष्ठा ज्ञानस्य या परेति । निष्ठा पर्य्यवसानं परिसमाप्तिरित्यर्थः ॥ ५० ॥

तदेवाह बुद्ध्येति । उक्तेन प्रकारेण विशुद्धया पूर्व्वोक्तया

शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्म्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४

---

सात्त्विकया बुद्ध्या युक्तो धृत्या सात्त्विकया आत्मानं तामेव बुद्धिं नियम्य निश्चलां कृत्वा शब्दादीन् विषयांस्त्यक्त्वा तद्विषयौ रागद्वेषौ व्युदस्य। बुद्ध्या विशुद्धया युक्त इत्यादीनां ब्रह्मभूयाय कल्पत इति तृतीयेनान्वयः। किञ्च विविक्तेति। विविक्तसेवी शुचिदेशावस्थायी लघ्वाशी मितभोजी एतैरुपायैर्यतवाक्कायमानसः संयतवाग्देहचित्तो भूत्वा नित्यं सर्व्वदा ध्यानेन यो योगो ब्रह्मसंस्पर्शस्तत्परः सन्ध्यानाविच्छेदार्थं पुनःपुनर्दृढं वैराग्यं सम्यगाश्रितो भूत्वा। ततश्च अहङ्कारमिति। विरक्तोऽहमित्याद्यहङ्कारं बलं दुराग्रहं दर्पं योगबलादुन्मार्गप्रवृत्तिलक्षणं प्रारब्धवशात् अप्राप्यमाणेष्वपि विषयेषु कामं क्रोधं परिग्रहञ्च विमुच्य विशेषेण त्यक्त्वा बलादापन्नेषु निर्म्ममः सन् शान्तः परमामुपशान्तिं प्राप्तो ब्रह्मभूयाय ब्रह्माहमिति नैश्चल्येनावस्थानाय कल्पते योग्यो भवति ॥ ५१—५३ ॥

ब्रह्माहमितिनैश्चल्येनावस्थानस्य फलमाह ब्रह्मेति। ब्रह्मभूतो ब्रह्मण्यवस्थितः प्रसन्नचित्तः नष्टं न शोचति न चाप्राप्तं काङ्क्षति देहाद्यभिमानाभावात्। अतएव सर्व्वेष्वपि भूतेषु समः सन् रागद्वेषादिकृतविक्षेपाभावात् सर्व्वभूतेषु मद्भावनालक्षणां परां मद्भक्तिं लभते ॥ ५४ ॥

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५
सर्व्वकर्म्माण्यपि सदा कुर्व्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६
चेतसा सर्व्वकर्म्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७
मच्चित्तः सर्व्वदुर्गाणि मत्प्रसादात् तरिष्यसि ।

---

ततश्च भक्त्येति । तया च परया भक्त्या तत्त्वतो मामभिजानाति, कथंभूतं, यावान् सर्व्वव्यापी यश्चास्मि सच्चिदानन्दघनस्तथाभूतं, ततश्च मामेवं तत्त्वतो ज्ञात्वा तदनन्तरं तस्य ज्ञानस्योपरमे सति मां विशते परमानन्दरूपो भवतीत्यर्थः ॥ ५५ ॥

स्वकर्म्मभिः परमेश्वराराधनादुक्तं मोक्षप्रकारमुपसंहरति सर्व्वकर्म्माणीति । सर्व्वाणि नित्यानि नैमित्तिकानि च कर्म्माणि पूर्व्वोक्तक्रमेण सर्व्वदा कुर्व्वाणः मद्व्यपाश्रयः अहमेव व्यपाश्रयः आश्रयणीयो न तु स्वर्गादिफलं यस्य स मत्प्रसादात् शाश्वतमनादि अव्ययं नित्यं सर्व्वोत्कृष्टं पदं प्राप्नोति ॥ ५६ ॥

यस्मादेवं तस्मात् चेतसेति । सर्व्वाणि कर्म्माणि चेतसा मयि सन्न्यस्य समर्प्य मत्परः अहमेव परः प्राप्यः पुरुषार्थो यस्य स व्यवसायात्मिकया बुद्ध्या योगमुपाश्रित्य सतत कर्म्मानुष्ठानकालेऽपि ब्रह्मार्पणं ब्रह्महविरिति न्यायेन मय्येव चित्तं यस्य तथाभूतो भव ॥ ५७ ॥

ततो यद्भविष्यति तच्छृणु मच्चित्त इति । मच्चित्तः सन् मत्प्रसादात् सर्व्वाण्यपि दुर्गाणि दुस्तराणि सांसारिकदुःखानि

अथ चेत् त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८

यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे।
मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९

स्वभावजेन कौन्तेय निवद्धः स्वेन कर्म्मणा।
कर्त्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥ ६०

ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति।
भ्रामयन् सर्व्वभूतानि यन्त्रारूढ़ानि मायया ॥ ६१

---

तरिष्यसि। विपक्षे दोषमाह, अथ चेत् यदि पुनस्त्वमहङ्कारात् ज्ञातृत्वाभिमानात् मदुक्तमेवं न श्रोष्यसि, तर्हि विनङ्क्ष्यसि पुरुषार्थाद्‌भ्रष्टो भविष्यसि ॥ ५८ ॥

कामं विनङ्क्ष्यामि न तु बन्धुभिर्युद्धं करिष्यामीति चेत् तत्राह यदहङ्कारमिति। मदुक्तमनादृत्य केवलमहङ्कारमवलम्ब्य युद्धं न करिष्यामीति यन्मन्यसे त्वमध्यवस्यसि एष तव व्यवसायो मिथ्यैवा-स्वतन्त्रत्वात् तव, तदेवाह प्रकृतिस्त्वां रजोगुणरूपेण परिणता सती नियोक्ष्यति युद्धे प्रवर्त्तयिष्यत्येव ॥ ५९ ॥

किञ्च स्वभावजेनेति। स्वभावः क्षत्रियत्वहेतुः पूर्व्वकर्म्म-संस्कारस्तस्माज्जातेन स्वीयेन कर्म्मणा शौर्य्यादिना पूर्व्वोक्तेन निवद्धो यन्त्रितस्त्वं मोहात् यत् कर्म्म युद्धलक्षणं कर्त्तुं नेच्छसि अवशः संस्तत् कर्म्म करिष्यस्येव ॥ ६० ॥

तदेवं श्लोकद्वयेन सांख्यादिमतेन प्रकृतिपारतन्त्र्यं स्वभाव-पारतन्त्र्यञ्चोक्तम् इदानीं स्वमतमाह ईश्वर इति द्वाभ्याम्। सर्व्वभूतानां हृन्मध्ये ईश्वरोऽन्तर्यामी तिष्ठति, किं कुर्व्वन्, सर्व्वाणि भूतानि मायया निजशक्त्या भ्रामयंस्तत्तत्कर्म्मसु प्रवर्त्तयन्, यथा दारुयन्त्रमारूढ़ानि कृत्रिमाणि भूतानि सूत्रधारो लोके भ्रामयति

तमेव शरणं गच्छ सर्व्वभावेण भारत।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३
सर्व्वं गुह्यतमं भूयः शृणु मे परमं वचः।

---

शरीराणि तदर्दित्यर्थः, यद्वा, यन्त्राणि आरूढ़ानि भूतानि देहाभिमानिनो जीवान् भ्रामयन्नित्यर्थः, तथाच श्वेताश्वतराणां मन्त्रः, "एको देवः सर्व्वभूतेषु गूढ़ः सर्व्वव्यापी सर्व्वभूतान्तरात्मा। कर्म्माध्यक्षः सर्व्वभूताधिवासः साक्षी चेता: केवलो निर्गुणश्च" इति। अन्तर्यामिब्राह्मणञ्च, "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति यं आत्मा न वेद यस्यात्मा शरीरं एष ते अन्तर्याम्यमृत" इत्यादि ॥ ६१ ॥

तमिति। यस्मादेवं सर्व्वे जीवाः परमेश्वरपरतन्त्रास्तस्माद् अहङ्कारं परित्यज्य सर्व्वभावेण सर्व्वात्मना तमीश्वरमेव शरणं गच्छ, ततश्च तस्यैव प्रसादात् परामुत्तमां शान्तिं स्थानञ्च पारमेश्वरं शाश्वतं नित्यं प्राप्स्यसि ॥ ६२ ॥

सर्व्वगीतार्थमुपसंहरन्नाह इतीति। इत्यनेन प्रकारेण ते तुभ्यं सर्व्वज्ञेन परमकारुणिकेन मया ज्ञानमाख्यातमुपदिष्टं, कथंभूतं, गुह्यात् गोप्यात् रहस्यमन्त्रयोगादिज्ञानादपि गुह्यतरम् एतन्मयोपदिष्टं गीताशास्त्रमशेषतो विमृश्य पर्य्यालोच्य पश्चाद् यथेच्छसि तथा कुरु। एतस्मिन् पर्य्यालोचिते सति तव मोहो निवर्त्तिष्यत इति भावः ॥ ६३ ॥

अति गम्भीरं गीताशास्त्रमशेषतः पर्य्यालोचितुमशक्नुवतः कृपया स्वयमेव तस्य सारं संगृह्य कथयति सर्व्वगुह्यतममिति

इष्टोऽसि मे दृढ़मिति ततो वक्ष्यामि ते हितम् ॥ ६४
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५
सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्व्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६
इदं ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७

---

त्रिभिः। सर्व्वेभ्योऽपि गुह्येभ्यो गुह्यतमं मे वचस्तत्र तत्रोक्तमपि भूयः पुनरपि वक्ष्यमाणं शृणु, पुनःपुनः कथने हेतुमाह। दृढ़-मत्यन्तमिष्टः प्रियोऽसीति मत्वा तत एव हेतोस्ते हितं वक्ष्यामि, यथा, मम त्वमिष्टोऽसि मया वक्ष्यमाणं दृढ़ं सर्व्वप्रमाणोपेतमिति निश्चित्य ततस्ते वक्ष्यामीर्थः। दृढ़मतिरिति क्वचित् पाठः ॥ ६४ ॥

तदेवाह मन्मना इति। मन्मना मच्चित्तो भव मद्भक्तो मद्भजन-शीलो भव मद्याजी मद्यजनशीलो भव मामेव नमस्कुरु एवं वर्त्तमानस्त्वं मत्प्रसादलब्धज्ञानेन मामेवैष्यसि प्राप्स्यसि अत्र च संशयं माकार्षीः त्वं हि मे प्रियोऽसि, अतः सत्यं यथा भवत्येवं तुभ्यमहं प्रतिजाने प्रतिज्ञां करोमि ॥ ६५ ॥

ततोऽपि गुह्यतममाह सर्व्वेति। मद्भक्त्यैव सर्व्वं भविष्यतीति दृढ़विश्वासेन विधिकैङ्कर्य्यं त्यक्त्वा मदेकशरणो भव एवं वर्त्तमानं कर्म्मत्यागनिमित्तं पापं स्यादिति मा शुचः शोकं मा कार्षीः, अतस्त्वां मदेकशरणं सर्व्वपापेभ्योऽहं मोक्षयिष्यामि ॥ ६६ ॥

एवं गीतार्थतत्त्वमुपदिश्य तत्सम्प्रदायप्रवर्त्तने नियममाह इद-मिति। इदं गीतार्थतत्त्वं ते त्वया अतपस्काय धर्म्मानुष्ठानहीनाय न वाच्यं, न चाभक्ताय गुरावीश्वरे च भक्तिशून्याय कदाचिदपि

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९
अध्येष्यते च य इमं धर्म्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७०

---

वाच्यं, न चाशुश्रूषवे परिचर्य्यामकुर्व्वते वाच्यं, मां परमेश्वरं योऽभ्यसूयति मनुष्यदृष्ट्या दोषारोपेण निन्दति तस्मै च न वाच्यम् ॥ ६७ ॥

एतद्दोषै रहितेभ्यो गीताशास्त्रोपदेष्टुः फलमाह य इममिति । मद्भक्तेष्वभिधास्यति मद्भक्तेभ्यो यो वक्ष्यति, स मयि परां भक्तिं करोति, ततो निःसंशयः सन् मामेव प्राप्नोतीत्यर्थः ॥ ६८ ॥

किञ्च न चेति । तस्मान्मद्भक्तेभ्यो गीताशास्त्रव्याख्यातुः सकाशादन्यो मनुष्येषु मध्ये कश्चिदपि मम प्रियकृत्तमोऽत्यन्तं परितोषकर्त्ता नास्ति, न च कालान्तरे भविष्यति, समोऽपि तस्मादन्यः प्रियतरोऽधुना भुवि तावन्नास्ति, न च कालान्तरेऽपि भविष्यतीत्यर्थः ॥ ६९ ॥

पठतः फलमाह अध्येष्यत इति । आवयोः श्रीकृष्णार्ज्जुनयोरिमं धर्म्म्यं धर्म्मादनपेतं संवादं योऽध्येष्यते जपरूपेण पठिष्यति, तेन पुंसा सर्व्वयज्ञेभ्यः श्रेष्ठेन ज्ञानयज्ञेनाहमिष्टः स्यां भवेयमिति मे मतिः । यद्यप्यसौ गीतार्थमबुध्यमान एव केवलं जपति तथापि मम तच्छृण्वतो मामेवासौ प्रकाशयतीति बुद्धिर्भवति, यथा लोके यदृच्छयापि यदा कश्चित् कस्यचिन्नाम गृह्णाति, तदासौ मामाह्वयतीति मत्वा तत्पार्श्वमागच्छति, तथाहमपि तस्य सन्निहितो भवेयम्, अतो यथा अजामिलक्षत्रबन्धुप्रमुखाणां कथञ्चित्

